उन्मुखः (प्रसारितः) यासुर्येषु तानि । आकृतस्थलानि उद्यानतडागादीनि, परिमुच्य विहाय । प्रचण्डं राजानमागतं वीक्ष्य यथा लोका निलीयन्ते, तथेहापि सर्वे गृहे गुप्ता भवन्ति । शीतोचितवस्त्रावेष्टितैर्नरैरपि, महीजैर्वृक्षैरपि पिण्डीकृतभावेन (आकुञ्चितसर्वावयवत्वेन) भूयः अधिकं स्थीयते । शीते वृक्षाणां व्याकोचात् । भूमा महत्त्वम् । किं न विद्यते, अपि तु विद्यत एव । वायुः । यद् वीराणां धूमायितभावः (पराक्रमगर्वः) बहिर्निस्सार्यते । शीतेऽपि, पक्षाडिनां गुप्ताद्धूमो बहिर्निस्सरति । (गर्वस्य धूमरूपेणोत्प्रेक्षणं भाषायामपि प्रसिद्धं 'कुछ धूआं हो तो निकाल दूं') । सर्वेषां फलानां मध्ये (निर्धारणे) । विषमहिमागमतः तव महिमा महीयते श्लाघ्यत इत्यर्थः । फलानां मध्ये सर्वत्र माहात्म्यमधिकमित्यर्थः । अथ वा सर्वेषां फलानामत एव हिमागमो जातः ('पाला मार गया') पराजिताः सर्वे इत्यर्थः । तेन तव महिमा श्लाघ्यते । महिमा-महिमा-आप्ताः ।। ७० ।।

---

## ॥ शीताधिक्यम् ॥

हिमकणवाहा वेगवन्तो गन्धवाहा यान्ति,
व्याप्ता वारिवाहावलिरातपनिरासिनी
पवननिर्गीता परं कम्पते विनीता प्रजा
हिमभयभीता भूरि भवननिवासिनी ।
मज्जनाय मन्दीपितवह्निविधाने क्षणं
मन्दीभूतजाड्यार्पिता विहृतिर्ह्रासिनी
सार्तिकं शीतबाधा लोकसाधारणसत्ता, ? न चे-
त्तांगमनुबाधा फलमाधासद्विलासिनी ।। ७१ ।।

हिमकणवाहिन गन्धवाहा (वायव 'रूढिर्योगापहारिणी')। आतपतिरोधायिनी वारिवाहावलिः मेघमाला। भूरि यथा स्यात्तथा हिमभयभीता। विनीता दीना। मन्दीभूत आस्य (अङ्गानां जडता) यस्याः सा। उदासयति तटस्थान्करोति दीपेत्यर्थः। णिजन्तादास्तेर्णिनि। विकृति शीतबाधा क्षणमर्पयति। सगमे सुसाधा सुलभा। विलासिनी यदि यत्र न आधास्यात् उष्णतासम्पादनेन यत्न न भस्यापयिष्यत् तर्हि किं शीतबाधा साधारणलोकसदृशी स्यात्, अपि तु नेत्यर्थः। 'वोताप्यो'रिति लृङ्विकल्पालिङ्। किं वा 'आदध्यात्' इति लिङ्स्थाने क्रियातिपत्तिविवक्षया लृङ्। सर्वथा विवक्षामाश्रित्य लिङ्लृङौ व्यवस्थापनीयाविति तत्त्वमिकेव्वल बुध्वा ॥ ७१ ॥

भूमिर्भाति भूरितरशीता, व्योमखण्डमिदं
शीतातिशयेन हिमवर्षामवलम्बते
वान्ति कम्पयन्तो भूरिशीता मरुतोऽमी भृशं
शीताधिकरुद्ध्वा वारि दंष्ट्रमवष्टम्भते।
कुञ्झटिकाव्याजाद्दिक्षु शीतस्येव भूतिर्भाति
किं बहुना वह्नावपि शैत्यं जातु जम्भते
शिशिरवशेन यान्ति परिभवमन्ये गुणा
मन्ये शीतमात्रसैन्यराज्यं परिजृम्भते ॥ ७२ ॥

शीतान् कम्पयन्तः दन्तमवष्टम्भते दन्ताने प्रतिघ्नातीत्यर्थः ('पानी काटने दौड़ता है' एव भाव।) कुञ्झटिकायाः (कुहासा—कोहरा) व्याजात्। भूतिर्वैभवम्। शैत्य जृम्भते सानिध्यवृद्धेनि, यद्यपि तयोरन्यो न प्रनायते। अतएव इलोक स गृह्णाति भाव। अन्ये तारतम्यादयो गुणा परिभव मन्दतां यान्ति। परिजृम्भते उत्कर्ष एमते ॥ ७२ ॥

## —शिशिरे वियोगी—

चारं चारमुल्लोलति हृदयविकम्पकरी
शीतानिललहरी हि तुहिनपुरस्सरी
उष्णोच्छ्वासकोष्णीकृततूलिकातलेऽपि नैति
निद्रा यत विद्राणेव संगमसुखाकरी।
मञ्जुनाथ चञ्चति न चिन्तातिरन्तरतो
दृश्यते समन्ततोऽपि सैव भावनाचरी
पार्श्वपरिवर्तननिवर्तनविवर्तशतै-
र्व्ययति वियोगिनोऽद्य शिशिरविभावरी ॥७२॥

हृदयकम्पकरीति, 'कृञो हेतु'इति टः। तुहिनस्य (हिमस्य) पुरस्सरी अग्रतो गामिनी। हिमसहकृतेत्यर्थः। 'पुरोऽग्रतोऽग्रेषु सर्तेः'इति टः। शीतपवनलहरी मुहुर्मुहुः उल्लोलति उद्वेलं चलति। अत्र शीतावारणे हो उष्णतानुवर्तिनावरणैरवां-देशाकृतिनिगमपादुपेयः। लोटृ उन्मादे, अथेव वा उष्णयोरेकत्रस्वल्पोऽसंलोट-व्यम्। उल्लोलः इत्याचरतीति आचारक्विपया वा कार्यं निर्वोढव्यम्। उष्ण निः-श्वासेन ईषदुष्णीकृतायाः तूलिकायाः (तूलपूर्णं आस्तरणम् 'गद्दा') तलेऽपि निद्रा न एति। स्वस्वद्वारसमागमेन, सुखाकरी (अनुकूलसंवेदनाकरी) 'सुखप्रियादानुलोम्ये' डाप्। निद्रा विद्राणेव, निद्रितविषया पलायितेव। 'द्रा कुत्सायां गतौ'। 'संयोगादेरातः' इति निष्ठानत्वम्। अन्तरतो हृदयात्। न चलति (न अपसरति)। भावनायां रात्रिन्दिवविचारे, चरति हृदये भा-स्वति सा। चरेटः। सा भाविकैव समन्ततो दृश्यते। पार्श्वस्य परिवर्तनम् ('करवट' बदलना) पुनस्तस्य निवर्तनम् (त्यागः), एवंविधैर्विवर्तशतैः आवृत्तिशतैः। व्ययति व्ययेति ॥ ७२ ॥

---

## —॥ शीतं प्रत्युपालम्भः ॥—



सहजसुगन्धगुणसिन्धुं पद्ममर्दयसे
सौरभसुबन्धुं किञ्च पाटलां दलयसे
शीतलसमीरैर्मञ्जुमल्लीमवमर्दयसे
यूथिकामतल्लीमपि निःसहं व्यथयसे ।
मञ्जुनाथ सेयं गुणवैरिताऽपि मर्षिता ते
क्षुद्रतामथापि बत दारुण! कलयसे
हंहो दुर्विनीत कथमेतत्सहनीयं शीत!
यत्त्वं वीतगन्धानपि कुन्दान् कन्दलयसे ॥७४॥

हे शीत! त्वं, सहजस्य सुगन्धगुणस्य सिन्धुम् (आकरम्) कमलम्, अर्दयसे मथ्नासि। शीते कमलनिरोधात्। 'वा पुंसि पद्म'मिति यदि पद्मस्य पुंस्त्वं कदाचिदाशास्महे, तर्हि तस्यैवंविधोऽवकाशः (सिन्धुं बन्धुम् इत्यनुप्रासपूरकः) अन्यत्र तु न स्यादित्याशयः प्रायोऽपि। सौरभस्य सुबन्धुं सुहृदम्। पाटलां दक्षिणदिशि प्रसिद्धं कापस्थालीपुष्पम् (ग्रामेषु पाटलशब्देन प्रसिद्धं 'गुलाब' पुष्पं वा)। मल्ली मल्लिका ('बेला'), नामैव तस्याः 'शीतभीरु'रिति। यूथिकामतल्लीम्-प्रशस्तां यूथीम्। तव गुणवैरिताऽपि मर्षिता, गुणविद्वेषोऽपि सोढः। क्षुद्रताम् तुच्छताम्। वीतगन्धान्। कन्दलयसे विकासयसि। अविवेकिनोऽल्पबुद्धेः स्वामिनोऽन्योक्तिविधया व्यज्यमानो वृत्तान्तस्तु मार्मिकेषु पुनरवधिमाय इत्यलम्। सर्वेऽपि प्रासाः अनुपमन्यासाः ॥ ७४ ॥

## ॥ शीतस्याभिनन्दनम् ॥

निभृतनिकुञ्जकेलिसदने समिद्धसुखं
स्थीयते निबद्धरसालापमतिनिर्भरे
केसरसुगन्धमतिमादकममन्दमाप्य
शयनमुदेति मृदुतूलसुखसंस्तरे ।
नूनमृतुराजमपि निर्भरमतीतमहो
प्रियवर शीत ! गुणमेवं समुदाहरे
पीवरसुरोजयुगमुरसि निधाय मम
सुन्दरसरोजमुखी शेते भुजपञ्जरे ॥ ७५ ॥

अतिनिर्भरे तिलाम्बरस्तुभिः पूर्णे, निभृतनिकुञ्जस्य केलिसदने । समिद्धसुखम् ( वर्द्धमानानि सुखानि यस्मिन्कर्मणि यथा तथा ) निबद्धो रसपूर्णआलापो यस्मिन्कर्मणि यथा स्यात्तथा च स्थीयते । अन्येषु ऋतुषु रसालापोचिता ईदृशी निभृतपरिस्थितिर्न भवतीति भावः । काश्मीरस्य अतिमादकं गन्धम्, अमन्दं यथा तथा आ–आप्य ! मृदुले तूलस्य सुखकारके आस्तरणे शयनं भवति । अन्येष्वृतुषु बहुलतूलं शाटिकापार्श्वं न भवति । ऋतूनां राजानं वसन्तमपि निर्भरमत्यन्तं अतीतम् उल्लंघितवन्तम्, वसन्ततोऽप्यतिशयितम् । समुदाहरे उदाहरणरूपेण वर्णयामि । चतुर्थे–पीवर सुन्दर सरोज सरोज, प्रासाः ॥ ७५ ॥





# नवरसवीथी

—ः मङ्गलसोरठा छन्दः :—

अकलितकलनाकारु, कुण्डलिमण्डनमण्डितम् ।
दलदिन्दीवरचारु, चरणयुगं सुखयतु सदा ॥ १ ॥

अन्यैर्देवैः अकलितायाः घटनायाः कारु, शिल्पि । अन्यकविकौशलानुपमाया रचनायाः परिचयोपि तच्चरणयुगसेवानुभाव इति अभेतनीं रचनामारभमाणानामप्यनेन ध्वनयति ॥ १ ॥

---

## —ः शृङ्गारः :—

—ः सोरठाछन्दः :—

रतिस्थायिकोऽगायि, नायिकादिजनितः शुचिः ।
दृक्क्षेपाद्यनुयायि,-चिन्तादिकसंचारिकः ॥ २ ॥

रतिः स्थायिभावो यत्र, नायिका ( नायक )दिभिः ( विभावैः ) जनितः, नायिकाद्यालम्बनक इत्यर्थः । दृक्क्षेपादयः ( कटाक्षादयः ) अनुभावा यत्र ईदृशश्च, चिन्तादिकः संचारी यत्रैवंविधमेनि कवेरभिप्रायः । शुचिः शृङ्गारः अगायि प्रोक्तः ॥ २ ॥

### ॥ तत्र पूर्वं नायिकाः ॥

### तत्रापि पूर्वं पूर्वानुरागे–

### ॥ मुग्धा ॥

नयनविलोक एव हृदयनिलीनं प्रियं
जानती न मौग्ध्याद् हृदयं च कुचबन्धुरम्
ताम्यति नवीनरोमरेखया सहैव जात-
मेषा विदती न मानसस्य महदन्तरम् ।
सपदि सुमध्यसुरतसदनेऽपि मञ्चगता
मानसिकभावैः श्रिता पञ्चशरपञ्जरं
अधुनाऽनधीननरनायके निलीनमना
दूयते नवीनमीननयना निरन्तरम् ॥ २ ॥

नयनाभ्यां विलोके दर्शनमात्रे एव हृदये निलीनं प्रियतमम्, नवोद्गताभ्यां कुचाभ्यां बन्धुरं मनोहरं स्वस्य हृदयं च मुग्धतावशात् न जानाति । तथा नवीनोद्भिन्नया रोमावल्या सहैव उत्पन्नम्, मानसस्य महदन्तरं न विदती, एषा ताम्यति खिद्यति । पूर्वं पुत्तलिकाक्रीडादिषु चित्तमासीत्, इदानीं तु प्रियजनकथावार्तासु मनो रमते इति । महदन्तरं रोमावल्युद्भेदेन [ यौवनोद्गमेन ] सहैवाऽऽयातीति भावः । सुमध्ये आस्तरणपुष्पाभरणादि-मण्डिते सुरतसदने मञ्चगताऽपि । मनोविकारैः कामबाणरूपैः स्थिता । प्रियतमविरहव्यथा भरेण पीडितेति भावः । अनधीने निद्रादीनां पराधीने, नरे नायके आसक्तमनाः । नवीना मीननयना ॥ २ ॥

---

## स्वाधीनपतिका

मामेवाऽनुमोदयन् करोति वेषभूषादिकं
मामेवाऽनुमान्य वस्तु किञ्चिदुपनीयते
मामिह विहाय न प्रयाति बहुकालं बहि-
र्मामेवावलम्ब्य तेन दिनमतिनीयते ।
मञ्जुनाथ तिर्यगवलोकनतोऽप्युद्विजते
किञ्चिद्भ्रूविभङ्गतोऽपि काममनुनीयते
प्रेयसोऽभिमाने सखि ! कथमु वसन्ति स्त्रियो ?
हन्त मम मानेऽप्यवकाशो नाभ्युदीयते ॥ ४ ॥

अनुमोदयन् अनुसरन् । मन्मनोऽनुसारमेव आत्मनोऽपि शृङ्गारादिकं रचयतीति भावः । मामेव अनुमान्य मामेव अनुमतां कृत्वा । किञ्चिद्वस्तु आनीयते । अतिनीयते याप्यते । भ्रूवक्रीकरणेऽपि तेन कामं यथेच्छम् । अनुनीयते अनुनयः क्रियते, भावे प्रत्ययः । प्रेयसा कृतेऽभिमाने, प्रेयसि रुष्टे इत्यर्थः । प्रेयान् मत्तो रुष्टो भवेदिति तु का कथा, परं ममापि मानस्यावसरो न अभ्युदीयते आगच्छति । तथाऽयं ममानुवर्तते, यथा मम अन्यमागयवी-दर्शनेन मानेच्छायां सत्यामप्यवकाशो न प्राप्नोतीति भावः ॥ ४ ॥

---

## वासकसज्जा

विरचितकुसुमहारसौरभसुभगतमे
ताम्बूलोपहारमसौ सदने समीक्षते
वातायनसन्निधौ च तल्पं कल्पयित्वा स्वयं
निदयमनल्पं सखीलोकात्परीक्षते ।

मञ्जुनाथ सामोदं विरच्य वरवेषमियं
द्वारदेशमानर्तितनयनमुदीक्षते
अवसितमण्डनापि रतिसदनाभिमुखी
काचिच्चारुचन्द्रमुखी मुकुरमवेक्षते ॥ ५ ॥

विरचितानां कुसुमहाराणां सौरभेण सुगन्धे अतिमनोहरे । दयिताय देयं ताम्बूलोपायनं समीक्षते पश्यति । स्वयं सदनं कलयिष्येत्यनेन परिजनादपि गोपनं ध्वनितम् । सखीजनात् अनल्पं निद्रां अभिगुप्ता मुहुरीक्षते । सख्यः पश्यन्ति नु नेति तासां सकाशात्स्वं गोपायन्तीत्यर्थः, पश्चात्तामेतदर्थं परिहसेयुरिति भावः । वरम् उत्कृष्टतमं वेषम् । विरच्य कृत्वा । निचः पाक्षिकतया न भ्रष् । आनर्तितनयनं यथा तथा प्रियमनीक्षायां द्वारदेशमुदीक्षते । अवसितमण्डना समापितशृङ्गारा अत एव केलिभवनाभिमुखी अपि काचिच्चन्द्रमुखी दर्पणमवेक्षते । शृङ्गारे कापि त्रुटिस्तु नास्ति किंवा, अथ कथं वा प्रियमनोमोहकं मे शृङ्गारमण्डनानि अनावश्यकान्यपि सौन्दर्यगर्वाद्दर्पणं वीक्षत इति भावः । मन्दा च सेयम् ॥ ५ ॥

---

## ॥ अभिसारिका ॥

### ॥ रूपकघनाक्षरीच्छन्दः ॥

दूरमवमोचितमनोज्ञमणिमञ्जीरक-
मथ परिमोचितमुखरमेखलं प्रयाति
चकितं चतुर्दिक्षु परिपश्यन्ती विनम्रमुखं
साध्वसमयन्ती जने दृष्टिपथमुपयाति ।

मञ्जुनाथ संकोचं वहन्ती पदशब्देनापि
प्रीतिमिथमङ्गीकृत्य साहसे पदं दधाति
मेचकनिचोलगुरुगोपितकपोलयुगा
सेयं नीलचोलवृता तन्वङ्गी तिरोदधाति ॥ ६ ॥

दूरम् अवमोचितौ मनोज्ञौ मणिमञ्जीरकौ (नूपुरौ) यस्मिन् कर्मणि यथा तथा, परिमोचिता मुखरा (किङ्किणीशब्दकारिणी) मेखला यस्मिन्कर्मणि तथा च । प्रयाति अभिसरति । विनम्रं मुखं यस्मिन्कर्मणि तथा । जने दृष्टिपथम् आगच्छत्येव साध्वसम् भयन्ती, भयं प्राप्नुवती सती । 'हट किट कटी' इति भणित्वा याता । निजपदशब्देनापि संकोचं वहन्ती, सेयं भीरुः, प्रेमपथमङ्गीकृत्य, घनतमसि अभिसरणरूपे साहसे पदं स्थापयति । मेचकनिचोले श्यामे अवगुण्ठनपटे, अतिगोपितं कपोलयुगं यया । कपोलयोश्चन्द्रवदवदाततया स्पष्टता भवेदिति नायिकायाः सौन्दर्यातिशयो ध्वन्यते । नीलचोलकावृता तिरोदधाति निलीयते । चतुर्थे चोल चोल चोल प्रासाः ध्येयाः ॥ ६ ॥

—⁂ विरहोत्कण्ठिता ⁂—

प्रायः पूर्वयाम एव रात्रेरयमेति गृहा-
नद्य दुःसहाऽसावद्दूरजनी व्यतीयते
म्लानः पुष्पहार एष, भूषा भूरिभार इयं
नानाविधचिन्ता मे समन्तादुपचीयते ।
मञ्जुनाथ कञ्जदृशा दत्तदीर्घनिश्वसितं
दूयमानयैवं सखी दैन्यादभिधीयते
दृष्टिं विनिधाय मार्गवातायने निष्ठुरं
नयने प्रमृज्य हन्त शयने निलीयते ॥ ७ ॥

मञ्जुनाथ संमुखमुपागतेऽपि मन्दपदं
दयिते, न किञ्चिदपि वाचमियं संजहौ
सलिलभरेण रुद्धनयनसरोजयुगा
मञ्जुलमृगाक्षी दीर्घनिःश्वासं शनैर्जहौ ॥ १० ॥

अलसा अङ्गलता यस्मिन् कर्मणि यथा स्यात्तथा, मन्दमन्दं चलनमसहमानौ पादौ भुवि निदधानः, रात्रिजागरणेन उपरक्ते नेत्रे, सपत्न्या अङ्गरागेण अरुणौ, अतएव मञ्जिमाऽऽवहौ बाहू च, सविलक्षं सलज्जं वहन् प्रेयान् (प्रियः) प्रातः वासभवनं निजकेलिगृहमयासीत् । संकोचेन मन्दपदं यथा तथा, संमुखागतेऽपि दयिते किञ्चिदपि वाचम्, इयं (नायिका) न संजहौ, किञ्चिदपि नोवाचेत्यर्थः । किन्तु—॥ १० ॥

---

—ॐ उत्का ॐ—

---

भवदुपकल्प्यमानसंकेतं समधिगम्य
नियतनिकेतं नीयमाना सा प्रसीदति
एवं व्याहरेयं पुनरेवमाचरेयं चेति
प्रचुरं मनसि चिन्तयन्ती हन्त सीदति ।
मञ्जुनाथ समयविलङ्घनेन खिन्ना चिरा-
त्क्षामं मदनेन दूयमाना सा विषीदति ।
पर्यङ्के प्रयत्नपरिरचितेऽनुतप्ता भृशं
शङ्के फुल्लपङ्केरुहनयना निषीदति ॥ ११ ॥

नायकं प्रति दूत्या उक्तिः । भवता कल्प्यमानं संकेतं ज्ञात्वा, नियतं निकेतं (स्थानम्) मधुरया नीयमाना सा भवदागमनसमाशया प्रसीदति । अहं किम-

तस्मै समागते एवं संलपेयम्, एवं च संगमचातुर्यं दर्शयेयम् इति चटु विचारयन्ती सीदति, परिश्रान्ता भवति। कामपीडिता सा पाषाणफलके कुसुमैः रचिते पर्यङ्के भृशमनुतप्ता सती साम्प्रतं तिष्ठतीति अहं शङ्के। अत एव न तस्या औत्कण्ठ्यं विफलनीयमिति भावः ॥ ११ ॥

---

## —॥ वृत्तसुरतगोपना मुग्धा ॥—

सायमवकाशमुपलभ्य गृहकार्यभरा-
त्कुसुमचयार्थमुपयाता भयभुग्नाऽहम्
परिमृदिता मे तरुलग्ना पश्य शाटिकाऽसौ
वृक्षवाटिकायां घनतमसि यदूनाऽहम् ।
मञ्जुनाथ कुसुमनिलीनैरनुयाताऽलिभिः
सरभसमायाताऽपि विटपविलूनाऽहं
शङ्कतामलीकं नर्मशाली काममालीजनो
हन्त मधुपालीदत्तदंशा रुदद्नाऽहम् ॥ १२ ॥

गृहकार्यभरात्, सायमवकाशं प्राप्य। आरयदेन कौटुम्बिककार्यस्य बाहुल्यं स्वकर्तव्यतां च सूचयति, अतएव कार्योत्तरं सायमेवापयाता इति पारस्परेण निर्दोषता व्यज्यते। भयेन भुग्ना संकुचिताऽहं कुसुमचयार्थं वाटिकामुपयाता। पल्लवितेषु तरुषु एषा मे शाटिका, परिमृदिता वल्लीविलुण्ठिता जाता, न तु छिन्नेति भावः। कथं वृक्षवाटिकायां शाटिका विशीर्णेति चेत्—यत् यतः, अहं घनतमसि ऊना एकाकिनी। एकाकिन्याः अन्धकारे भयवशात् शीघ्रं शीघ्रं पुष्पिततरुसमीपगमनेन अनवधानपतनाद्विशीर्णतापः। कथं स्थाने स्थाने क्षतानीत्याह—कुसुमेषु निलीनैः रात्रिकारणाद्विपदं स्थितैः भ्रमरैः अनुयाता। निभृतमाश्रितानां भ्रमराणां सहसा स्थानविच्छेदकारणे·

पातिशय इति सुदूरमनुसरणम्। अतएव तेषां भयात्सरभसं चलितापि अहं सत्वरमसामर्थ्यविद्धा विक्षता। भ्रमरभयपलायनादिमार्गेण पलायनादिरूपैः शरीरोत्सेद इति भावः। मर्मशाली परिहासशीलः सखीजनः कामं (यथेच्छम् अनेन निर्दोषाया मे न भयमिति सूच्यते) अलीकं मिथ्या यत्किञ्चित् परिहासम्, मधुपानाम् आस्या दत्तौ दंशौ यस्याः साऽहं दष्टं नूना पीडिता। दन्तपीडाप्रदर्शनात्साहमधिककाले वक्तुं वा ध्यातुं वा शक्नोति गोपनचातुर्यं व्यज्यते। मर्मशालीत्युक्त्या यदि सखीजनः किञ्चिदपराधेऽपि परिहासमात्रं परिणयेतेति सूच्यते। किञ्च अलीकं मर्मशाली सखीजनः प्रायो अकाण्डमेव परिहासं करोति, अत एव न तत्परिहासे विश्वसनीयमिति व्यज्यते ॥ १२ ॥

---

## —⁂ प्रोषितपतिका (विरहिणी) ⁂—

पञ्जरशकुन्तैर्नाधिगच्छन्ती प्रमोदं मनाग्
विरहविनोदं वीणयाऽऽप्तुं मा प्रसीदति
प्रियगतचित्ता पुनस्तामपि निधाय पृथक्
कामं चिन्तयन्ती हन्त विरहाद्विषीदति।
पाण्डुरकपोलपरिचुम्बिनश्चिकुरभरान्
पृष्ठे विनिधाय मञ्चपृष्ठे गता सीदति
ध्यानमग्नचित्तमवधानरहितेयं हन्त
मृदुमुपधानतले चिबुकं निषीदति ॥ १२ ॥

पञ्जरस्थितैः पक्षिभिः प्रमोदं न प्राप्नुवती, ततः पराङ्मुखीभूता, वीणाद्वारा मनाक् (किञ्चित्) विरहे विनोदं कर्तुं सा प्रसीदति। सखीसमर्पितया वीणाद्वारा विरहं विस्मर्तुं साऽनुमता अवधीरितावापः। तत्रापि विनोदमलभमाना तां निक्षिप्य कामं यथेच्छं दयितं चिन्तयन्ती सा हन्त विरहात् दुःख

विषादं प्राप्नोति । चिकुरभरान् केशनिचयान् । अनेन घनानामपि तेषां भारायितत्वमेवेति सूच्यते । 'भरम्' इत्यनुक्त्वा 'भरान्' इति बहुत्वेन, अप्रसाधनवशात्केशानां वेणयो जातास्ताश्च बहुशो विकीर्णा इति समूहस्यापि बहुत्वेन विरहातिशयो ध्वन्यते । तल्पोपरिस्थिता सीदति (क्लिश्यति) । ध्याननिमग्नचित्त यस्मिन्कर्मणि यथा भवति तथा, मूढवत् अवधानरहिता, मीलितनयन तथा वैचित्र्यमवाप्ता इव चित्रगता वियोगिनी हन्त नितराम्, उपधानोपरि निषीदति—सर्वभरं तस्मिन्नेव स्थापयतीत्याशयः ॥ १३ ॥

कृशकरकञ्जशायिकोमलकपोलतला
मुहुरमनञ्जनदृङ् मन्थरमवेक्षते
सदयसखीभिरुपनीतं वेषभूषादिक-
मुष्णमुच्छ्वसन्ती विपरीतं पर्यवेक्षते ।
मञ्जुनाथ काञ्चनपिशङ्गतनुदेहलता
मनुजगतागतेषु तस्मिन प्रतीक्षते
निविडनिबद्धामेकवेणीमियमन्यमना
वारं वारमेणीचलनयना निरीक्षते ॥ १४ ॥

कृशे करकमले शेते तच्छीलं कोमलं कपोलतलं यस्याः सा, कपोलौ करे करे स्थापितमुखाम्बुजा इत्यर्थः । 'शायि'पदेन मुखकमलस्य निर्भरता ध्वन्यते । अनादृतशृङ्गारत्वाद् अनञ्जने दृशौ (नेत्रे) यस्याः, अथवा सखीनामाग्रहातिशयपीडावशादन्यथा दत्तमञ्जनमपि रोदनाद्गलितम् । सखीनामाग्रहात् कृतशरीरालङ्कारा नितान्तमानीतं दर्पणं मन्दं यथा स्यात्तथाऽवेक्षते । निरस्तादरतया नेत्रयोरञ्जनस्याभावेन विरहातिशयो ध्वन्यते । कदाचित्प्रसाधनादिषु व्यासज्यमानमानसायाः अपि विनोदः स्यादिति सदयाभिः सखीभिरानीतं वेषभूषादिकं दीर्घतरोष्णोच्छ्वासा विपरीतं (अमण्डनकरम्) पर्यवेक्षते जानाति । अथवा, सदयसखीभिर्वेषभूषादिकं सम्मुखे आनीतम्, इदं तु तस्या निःश्वसन्ती

घृणावशात् विपरीतं ( ततो विरुद्धं पृष्ठभागे ) अवेक्षते । काञ्चनवत् पिशङ्गा ( पीता ) सूना च देहलता यस्याः सा । अनेन स्वाभाविकशोभाशालिता ध्वनिता । गृहवर्तिनां लोकानां गमनाऽऽगमनेषु तं प्रतीक्षत इव । एवमास-क्तमनाः प्रियतमः कथमवधिकालं लङ्घयेदिति असमयेऽपि तं प्रतीक्षत इति प्रेमातिशयो व्यज्यते । गाढं परिजटिताम् एकां वेणीम् ( सर्वेषां केशानामेकं घनोरुकरम् ) अन्यत्र मन्थरवीक्षणापि, वेणीनिरीक्षणे मृगीवचञ्चलनयना सती मुहुर्मुहुर्वीक्षते । वेणीं पश्यन्ती पुनः प्रियतमसमागममुत्क ण्ठितल-ग्नमनाः । प्रिय एव गमनसमयमनिशमनुसारं वेणीमवमोचयिष्यति, अथवा दयवता कदेयं वेणी सुन्दरमलिलुम्परूपे परिणमते इति मुहुर्वेणीवीक्षणव्या-पारः ॥ १४ ॥

---

## —॥ देयघनाक्षरीच्छन्दः ॥—

विश्रम्भं प्रयातवति परिजनवर्गे भूरि-
संरम्भं दधाति परिचरणं चरति चरति
विरहकृतान्तनाशितान्तमेव शान्ति गता
शान्ति नोपयाति हृदि पङ्कजं हरति हरति ।
मञ्जुनाथ मन्युममारोहं वर्णयामि किमु
संमोहं गमेति जने सविधे सरति सरति
विषममधैर्यमहो वर्द्धते वयस्यागये
धैर्यमथ तस्या मनोधरणी धरति धरति ॥ १५ ॥

विश्रम्भं विश्वासं गतवति, अभिविश्वस्ते इत्यर्थः । अनेन परिजनस्य हृदया-भिज्ञता व्यज्यते । तथा परिचर्यां कुर्वति कुर्वति, परिजनवर्गे भूरिसंरम्भं दधाति । ( अतिकोपगर्भमनं वरुणि, 'इंसल्गी है' भाषा ) । कुर्वति कुर्व-तीति द्विरुक्त्या परिचर्यायाः कृत्रिमतयामेव सम्पूर्णतामनन्यहृदयैव परिचर्या-

विषये क्रोधं गच्छतीति ध्वन्यते । ["परिचर्या करते करतेभी झुंझलाती है' एष भावः ।] एवं सर्वत्र द्विरुक्तौ बोध्यम् । परिजनवर्गे शीतत्वनिमित्तं हृदये कमलं स्थापयति स्थापयत्येव । तान्ति खेदम् । मन्युसमारोहं शोको-पचयम् । किं वर्णयामि, आश्वासननिमित्तं लोके समीपमागच्छत्येव संमोहं समेति, मूर्च्छां गच्छति । तस्या (विरहिण्या) मनोधरणी हृदयस्थले धैर्यं (आश्वासनम्) धरति धरत्येव सखीगणे, विषममवर्णनीयमधैर्यम् (खेदकृता अधीरता) अहो वर्द्धते । असंगतिः । अत एव, एवमवस्था सा नः सखी त्वरितमाश्वासनीयेति दयितदेशगामिनं पान्थं प्रति सख्याः सन्देशः ॥ १५ ॥

क०—विरहविनोदनाय सेयमुपवीणयन्ती
यच्छमं विचिन्तयन्ती मोहमुपवहते
कृशकरकञ्जपरिकीलितकपोलतला
विलुलितकुन्तला विलोकमपहरते ।
मञ्जुनाथ रशनाकलापेनोपभान्ती भृशं
शिथिलदुकूलं भुजमूलं मञ्जु वहते
वीणामियमङ्के विनिधाय हन्त पर्यङ्केऽपि
मीलन्नेत्रपङ्केरुहा प्रीतिं नोपलभते ॥ १६ ॥

उपवीणयन्ती वीणया उपगायन्ती सेयं (नायिका), दयितं स्मरन्ती, मोहं गच्छति । विलुलिता इतस्ततो विकीर्णाः केशा यस्याः सा, विलोकमपहरते अवलोकनं संहरते, नेत्रे निमीलयतीत्यर्थः । 'परिकीलित' पदेन पद्मे सत्यपि मुखस्य हस्तादनपसरणेन मनोमालिन्यातिशयो ध्वन्यते । मनोहरेण (रत्नालंकृतेन) काञ्चीकलापेन भृशं शोभमाना, शिथिलशाटिकाञ्चलं सुन्दरं भुजमूलं (कुचतटम्) वहते, संभ्रमवशाद्दुकूलाञ्चलं वक्षःस्थलाद् गलति, अत एव कुचतटमालोक्यत इत्याशयः । अतएव शयनपर्यङ्केऽपि, मुद्रयमाणनेत्र-कमला प्रीतिं नोपलभते । वीणावादनादयः सर्वेऽपि विनोदाः प्रियस्मरणसा-

लिंकरिपाद्यामे पराजिता भवन्तीति परमवैभवशालिन्याः पदेपदे सखीभी राजोचितैरुपकरणैः सेव्यमानाया विरहिण्याः क्लेशावस्था सूच्यते। विरहिण्याः शृङ्गारमालोक्य न समालोचकैर्विमनायितव्यम्, अपि तु बलात्सखीभिर्विनोदाय भूष्यमाणापि न मनागपि मनःसन्तोषं प्रयाति, प्रत्युत मनोवेगो वर्द्धत एवेत्यान्तरिकी अवस्था सूक्ष्ममालोचनीयेत्यलम् ॥ १६ ॥

---

## —॥ प्रवसत्पतिका ॥—

दयितेऽतिदूरदेशयात्राकथामातन्वति
ग्लानिमुपयाति बत बद्धबाष्पमोचना
उषसि विदेशनेयवस्तु चिनयन्ती भृशं
ताम्यति वहन्ती मोहमत्राऽभृतप्ररोचना ।
मञ्जुनाथ मन्दिरसमीपादुपयान्तमिमं
पश्यन्ती प्रकामं हन्त बाष्पभृतलोचना
वातायनदेहलीविलम्बिदूनदेहलता
जाता प्रतिमेव परवारिजविलोचना ॥ १७ ॥

दयिते (ननु स्वामिनि, अभिमतपो वोत्सवे) अतिरूपमागाया अतिदूरदेशयात्रायाः कथां कुर्वति सति, बद्धं बद्ध अश्रुविमोचनं यया, (बद्धबाष्पमोचना) (सा इयं नायिका) ग्लानिमुपयाति। प्रयाणकथाश्रवणमात्रेण, यात्री प्रवृत्ता पूर्वं मुखे भाविनी छुप्यत इति भावः। पुनः प्रातः, विदेशनेयं स्वामिनो वस्तु विनयन्ती संगृह्णती, अतएव विषादवशात् भृशं मोहं (मिद्धता) वहन्ती, ताम्यति क्लिश्यति। प्ररोचना (प्रोत्साहनादिकम्) अत्राऽभूदनुत्पन्न। 'त्वं तु विवेकिनी, न मम गमने मनःखेदं धारयिष्यसी'-त्यादि स्वामिवचनात्मासनादिकं कश्चिन् क्षणे सर्वमप्यंगतमिति भावः। अथ

निजगृहसकाशाद् गच्छन्तमिमं ( दयितम् ) पश्यन्ती, भृशं अश्रुस्नुतलोचना-ऽभूत्। किं च तस्मिन् क्षणे प्रवसतो वल्लभस्य विलोकनाय, अट्टालिकाया वातायनस्थ ('खिड़की') देहल्यां विलम्बिनी ( दूरंगतस्यापि प्रियस्य भ्रम-माणस्य विलोकनात् ) दूना म्लाना देहलता यस्याः सा । लतापदेन गच्छतो दयितस्य दर्शनात्तात्कालिकोऽवसादः सूच्यते। अथवा लता, यथा वृक्षाद्यधि-तैव तिष्ठति, तथाऽयं देहोऽपि ( विरहे ) किमाश्रयो भवेदिति भावो ध्वन्यते । कमलनयना ( नायिका ) प्रतिमा इव, मूर्तिरिव जाता । वारिजपदेन तात्कालं निर्गलदश्रुवारि स्मर्यते । चतुर्थे–याता जाता भासो बन्धानुगुणः ॥ १७ ॥

—॥ प्रवत्स्यत्पतिका ॥—

दयिते विदेशगमनानुमतिमाकाङ्क्षति
गलितदुकूलमसौ सीदति ससंभ्रमम्
नेत्राभ्यां समीपजलयन्त्रमनुकुर्वतीव
कान्तहृदयेऽपि सृजतीह मौनविभ्रमम् ।
मज्जनाथ वपुषि निपक्तबाहुवल्लीभरा
मारुतमथितमञ्जुमल्लीवति चिरम्
कीलितकुचाग्रमवमीलितनयनमियं
शीलितविनयमवरुन्धे गमनोद्यमम् ॥ १८ ॥

आकाङ्क्षति याचति सति, विषादकृतेन वैक्लव्येन गलितं दुकूलं यस्मि-न्कर्मणि तथा, ससंभ्रमं सीदति अवसन्ना भवति । समीपस्थं जलयन्त्रम् (फुंहारा) अनुकुर्वतीव, नेत्राभ्यां बहुलमश्रु विसृजन्तीत्यर्थः । दयितहृदयेऽपि मौनभावमुत्पादयति, नायिकाया इमामवस्थामवलोक्य दयितोऽपि न किंचि-द्वक्तुं सामर्थ्यदिति भावः । कान्तस्य वपुषि स्थापितभुजलताभारा । मारुतोन्मु-

स्थितमधिकाधिकतयैव (कान्तवपुषि) विश्रमम् एति, कान्तशरीरमवलम्बते इति भावः। अत एव, पीडितं कुचाग्रं यथा स्यात्तथा (अनेन कुचयोः कठोरता, वक्षः कान्तवपुषि विसृज्य विश्रान्ताऽभवदित्यपि च व्यज्यते।) निमीलितनयनम्, शीलितविनयं (स्वीकृतनम्रतावचनं) च यथा स्यात्तथा दयितस्य समनोरथं धारयति। सैषा राजकुलवधूर्नायिका ॥ १८ ॥

---

## →※ विश्रब्धसुरता मध्या ※←

नानाविधव्याजैः केलिभवनविनीताप्यसौ
भूरिभयभीता द्वार एव स्थितिमातनोति
मातृगृहवार्ताभिर्निकाममवरुद्धाप्यहो
संनिधौ समेतुं हन्त भूयः करं संधुनोति।
एवमतिमुग्धमतिमञ्जुलमतीता वयो
नैपुणेन नीताऽनङ्गगोचरं मनो धिनोति
या यै स्पर्शे एव चटुचीत्कृतानि चक्रे चिरं
सैव सीत्कृतानि सुरतसदने समातनोति ॥ १९ ॥

केलिभवनं विनीता प्रापितापि। केलिभवनस्य द्वारे एव तिष्ठति। यदा च भवनद्वारादपि गन्तुं यतते, तदा मातृगृहस्य वार्ताभिः अतिशयत्वेन अवरुद्धापि, प्रियस्य संनिधौ आगन्तुं तु पुनः करं धुनोति। करं कम्पयित्वा आगन्तुं निषेधयतीत्यर्थः, पितृगृहस्य स्थाने मातृगृहपदेन मातुर्वात्सल्याद् मनोऽभिनिवेशेन निवर्तनीयो मातुः प्रेम तस्याः सूच्यते। एवं शनैः शनैः अति-मुग्धम्, अतिमनोहरं च तद्वयः अतीता, (त्यक्तवती) प्रियतमेन अतिनिपुणत्वेन शनैः शनैरनङ्गगोचरं कामचरितं नीता सती, इदानीं स्पर्श-

एभिः प्रियस्य मनः प्रीणयति। अतएव सर्वसारमाह—पूर्वं या स्पर्शमात्रे कृते एव निजमोचनाय प्रियचाटुपूर्वकाणि चीत्कृतानि चक्रे। अथवा चटुलानि चञ्चलानि चीत्कृतानि चक्रे, सा एव संप्रति सुरतसदने सीत्कृतानि करोति। पूर्वं नाममात्रतः केलिभवनमासीदिदानीं तु सत्यं सत्सुखसदनमभूदिति सुख-सदनपदेन ध्वन्यते ॥ १९ ॥

---

## —※ लक्षिता ※—

निभृतमुपागतेन नक्तं दयितेन रतिं
समधिकलज्जा सा सखीतो यत्तिरोदधौ
तदिदं निबुध्य सखी प्रातः कुसुमोपवने
व्यङ्ग्यवचनेन तामजस्रं लज्जितां दधौ।
विदलितकङ्कणं छलेन गोपयन्ती सा तु
दक्षिणं कराब्जमवकुञ्च्य मौनमायया
लुम्पन्ती कपोलमधरमुद्रयेव सखी-
संमुखे शशाङ्कमुखी नम्रमुखी संबभौ ॥ २० ॥

नक्तं रात्रौ गुप्तमागतेन दयितेन साकं संजातां रतिम्, अतिलज्जावती सा नायिका सखीसकाशे, यत् (यस्मात् कारणात्) गोपयाञ्चकार। तदिदं गोपितं वृत्तं निबुध्य (ज्ञात्वा), सखी प्रातः कुसुमोपवने तां नायिकां व्यङ्ग्य-वचनैः अतिलज्जितां चकार। रात्रौ रतिसंभ्रमे, विदलितः कङ्कणः (कापय-स्पः) यस्य ईदृशं दक्षिणं करकमलं निवेश्य, अवकुञ्च्य पृष्ठदेशे संवृत्य गोपयन्ती सा (नायिका) मौनमायया, लुप्तमभवत्। तत्र—अधरसंपुटमेव विचारमुद्रयेव शिरःनाम्ना (निपदनामाहितं) कपोलं गोपयन्ती शशाङ्क-

मुखी, सख्याः संमुखे नम्रमुखी सती शुशुभे। नायिकया एवं मुखमुद्रां कृता यया किञ्चिदिदं विचारयति, तत्रश्च तादृशे व्यापारे मुखमवनमयन्ती, सा सुभगा शुभाञ्चलेन कपोलमाच्छाद्य नम्रमुखी सती तस्थावित्याशयः २०

---

—स्वयंदूतिका (वचनविदग्धा)—

याता निजजनकनिकेतमुपयाता पति-
रुपसि विदेशान्प्रति याता शयितोऽधुना
श्वश्रूरियमन्धा, निशि शय्यायां निमग्ना भवे-
द्देवरोपि कार्यप्रतिबन्धादयितोऽधुना।
मञ्जुनाथ मेघमण्डलेन मेचकाभं नभो
भवनेऽहमेका न भोः सुप्ता भवतोऽधुना
क्षम्यतां दिनान्तसमयागत चतुरपान्थ!
विवशा निवासमहमावासे यतोऽधुना ॥ २१ ॥

कारितमिति यावत् । मञ्जुनेत्यनेन मम मनो न हस्तगतमत एवास्मिन्नन्ध-कारितदिगन्ते समयेऽवश्यं स्थातव्यमिति गुप्तं सूच्यते । भोः (पान्थ) भवने अहम् एका, अत एव भयात् अधुना सुप्ता सुचिता नास्मि । भयाद् अधुना सुप्ता नेत्यनेन, एवं दशायां त्वां विना मम सुस्थितिर्न भवेदिति सूच्यते । 'अधुना' पदेनात्र 'इदानीमसुप्तापि त्वत्समागमे' सुखिनी भवे-यमिति पान्थानुकूल्यं द्योत्यते । त्वं दिनान्ते सायमागत इति एकाकिनी स्त्री अहं त्वां कथं आवासयामीति वाच्योऽर्थः । वास्तवे तु सायंकाले आगतः पान्थः क्वान्यत्र प्रहीयेतेति तव स्थितिरत्रैव समुचितेति व्यज्यते । 'चतुर' पदेन त्वं चतुर इति मद्विवशतां ज्ञात्वा क्षमापूर्वकमन्यत्र गमिष्यसीति वाच्योऽर्थः । वास्तवे तु एवं व्यङ्ग्यार्थबोधविदग्धाय किं तेऽधिकं वदामीति स्वाभिप्रायो द्योत्यते । अधुना आवासे (निवासं कारयितुम्) विवशास्मीति 'अधुना' पदेन यदि आवयोः संवादं शृण्वतां लोकानां भयेन, इदानीमिति गच्छसि, तदा किञ्चिद्विलम्ब्य पुनरागन्तव्यमिति मार्गो दर्श्यते ॥ २१ ॥

---

**→❀ विप्रलब्धा ❀←**

कश्चिन्मिषमाप्य मञ्जु विरचितवेषा पूर्व-
संकेतितमेषा केलिवनमपि संययौ।
तत्र चिरचिन्तितमनागतं दयितमेत्य
दूनहृदयाऽसौ दीर्घनिःश्वासान्मुहुर्जहौ ।
भ्राम्यन्नेत्रकञ्जमतितान्यत्तुङ्गवक्षोरुहं
भ्राम्यद्भुजलतिकं विमोहमियमाययौ
तामेतामवस्थामवलोक्य सखी स्तम्भितेव,
मोहमागतेव, चित्रलिखितेव, निर्ममा ॥ २२ ॥

'मानिनी"



" मन्दीभूतमानापि च किं दीनं न मोदयसे
कालिन्दीपुलिनगतमिन्दीवरनयने ! "

Lakshmi Art Bombay, 8

मधु मनोहरं यथा स्यात्तथा विरचितवेषा कृतशृङ्गारा एषा ( नायिका ) पूर्वतः संकेतितं केलिवनं कंचिद् प्रियम् आ-आप्य ययौ । तत्र केलिवने चिरकालात् हृदये चिन्तितं दयितम् अनागतम्, आ-ईक्ष्य ( दृष्ट्वा ) । ततश्च प्रियमार्गविलोकनेन श्राम्यन्ती सिच्यमाने नेत्रकमले यस्मिन्कर्मणि तथा, निःश्वाससमधाराग्निसंतापिते ( ?) कुचयुग्मयोः अनिलाय्यन्तौ ( क्षिपन्तौ ) पुरः पश्यौदहे यस्मिन् कर्मणि तथा, श्राम्यन्त्यौ भुजलते यस्मिन् कर्मणि तथा, इयम् नायिका विमोहम् आययौ, मुमोह । निकटे स्थिता सखी, तामेतां मोहापन्नां विलोक्य, मोहम् आगतेव वैचित्र्यं प्राप्तेव, स्तम्भं गतेव चित्रार्पि-तेव, नितरां क्षमां तुतुमे ॥ २२ ॥

---

—※ मानिनी ※—

---

निपुणपुलिन्दीगणसेवितसमीपभुवि
सरसि न सङ्गताऽसि तं दीनं सुवदने !
याऽहं दीर्घदाही कामवन्दीकृत्वेयं यत
मोहमदसन्दी ते विलासो मञ्जुनयने ! ।
मञ्जुनाय सन्दीपितविरहहुताशमिमं
दयितममन्दीभूततापं कञ्जनयने
मन्दीभूतमानापि च किं दीनं न मोदयसे
कालिन्दीपुलिनगतमिन्दीवरनयने ! ॥ २३ ॥

हे सुवदने ! ( इदानीं कोपयमानमने सुन्दर् गतं इति सूच्यते ) निपुणेन रहस्यगोपनचतुरेण पुलिन्दीगणेन सेविता ( रक्षिता ) समीपभूः ( प्रान्त-देशः ) यस्य ईदृशे सरोवरे, तं दीनं नायकं त्वं न संगतासि न अभिसृतासि । नायकेन यस्मिन् सरसि संकेतो कृतस्तत्र तेन सार्कं न मिलितासि । म

च तत्र रहस्यभेदशङ्का कार्या, यतस्तत्र निपुणो भिल्लीगणः समन्ताद्रक्षणापेक्षणं करोतीत्याशयः । हे मञ्जुनयने ! तव वियोगे अतिदीर्घ (अत्यन्तम्) दाहकरः, मोहं मदं च सन्दत्ते प्रसूते ईदृशस्तेऽयं विलासस्तं जनं कामस्य वन्दिनं कुरुते । दयितस्ते विलासैरतिवशीभूतस्तया च कामवन्दीकृतः सोऽवश्यं रक्षणीय इत्याशयः । सन्दीपितो विरहवह्निर्यस्य तम्, अत एव कमलनिर्मिते शयने शयनीयेऽपि, न मन्दीभूतः (प्रशान्तः) तापो यस्येदृशमिमम् । अत एव दीनं दयायोग्यम्, त्वत्प्रतीक्षायां कालिन्दीपुलिने स्थितमिमं दयितम्, मन्दीभूतमानापि हे इन्दीवरनेत्रे त्वं किमिति न प्रीणयसि । तव मानोऽपि शान्तः, सोऽपि त्वत्प्रतीक्षया अतिश्रान्तो दयायोग्योऽस्तीति साम्प्रतमपि तं किमिति नाभिसरसीति नायिकां प्रति सख्या दूत्या वा उक्तिः । पुलिन्दी तं दीत्यादयः सर्वचरणगताः प्रासाः प्रेक्ष्याः ॥ २३ ॥



## कलहान्तरिता



" एवं प्रागमन्दीकृतनाथं परितप्यतेऽस
संदीपितकामवेगमिर्ग्रीवरनेत्रया ॥ "

LakshmiArt, Bombay, 8




तत्र पूर्वं

स्वयं सन्देशः

काचित्कुवलयलोचना निजभवनान्तिकमेव ।
दिनावसाने समचरत्सायंसमयरमेव ॥ १ ॥
प्रतिवेशिन्यपि निजभवनमेका समधिरुरोह ।
पथि पथिकः कश्चन तदा पूर्वां वीक्ष्य मुमोह ॥२॥
निशि निवासमयमभिलपन् साकूतं समुवाच ।
संबोध्य प्रतिवेशिनीं सरसं शंसति सा च ॥ ३ ॥

काचित्सुन्दरी दिनस्यावसानकाले सायंकालस्य रमा (लक्ष्मीः शोभा) इव, निजगृहस्य समीपे एव संचरति स्म विहरति स्मेत्यर्थः ॥ १ ॥ तस्मिन् समये तस्याः सुन्दर्याः एका प्रतिवेशिनी अपि ('पड़ोसिन') निजभवनम्, आरोह, गृहपृष्ठे आगतवतीत्यर्थः । तदा मार्गे गच्छन् कोऽपि पथिकः पूर्वाम् (पूर्वोक्तां सुन्दरीम्) दृष्ट्वा मोहितोऽभूत् ॥ २ ॥ अत एव, अयं सुन्दर्याः गृहे रात्रौ निवासं वाञ्छन् सन् साकूतं (साभिप्रायम्) उवाच । सा (सुन्दरी अपि) प्रतिवेशिनीं संबोध्य मधुरं शंसति प्रत्युत्तरयति । सा साक्षात्पथिकाय उत्तरं न ददाति, किन्तु मन्दे प्रतिवेशिनीं संबोधयति, उत्तरं तु तत् पथिकार्थमस्तीत्याशयः ॥ ३ ॥ (भूमिका ।)

पथिकः—नभसि जृम्भते घनघटा, तमसि लुप्यतेऽध्वापि ।
वदसि वसतिमुपयामि यदि, भवसि पथिकसदयापि ॥४॥

जृम्भते क्रमक्रमेण वर्द्धते मेघघटायाः पर्यन्तो न दृश्यते, अग्रे किं भवेदिति भयेन अत्रैव निवासस्यावश्यकता द्योत्यते । अध्वा मार्गोऽपि अन्धकारे न दृश्यते । अग्रे कथं गम्येत । यदि त्वं वदसि, तर्हि वसतिं (निवासम्) प्राप्नोमि अत्र निवसामीत्यर्थः । 'यदि' काकाक्षिगोलकन्यायेनाग्रेऽपि संबध्यते । यदि त्वं पथिके (मार्गलङ्घनपरिश्रमादयनीये) सदयापि भवसि, तर्हि अत्र निवासं प्राप्नोमि । अनेन केवलं निवास एव नाभीष्टः किन्तु अहं ते दयामपि वाञ्छामीति निगूढमभिप्रायो ध्वन्यते चतुर्ष्वपि चरणेषु 'नभसि, तमसि' इत्यादयः प्रासाः प्रेक्ष्याः ॥ ४ ॥

सुन्दरी—भवनमपरिजनमिदमियं विजनविनेयनिशास्मि ।
वसतिमभ्युपैतुं पुरः प्रतिवेशिनि ! विवशास्मि ॥ ५ ॥

इदं भवनम् परिजनशून्यमस्ति । इयम् अहम्, विजने विनेया (यापनीया) निशा यस्याः ईदृशी, अस्मि । अपरिजनेऽस्मिन्भवने अहमेकाकिनी रात्रिं यापयिष्यामि । अत एव हे पुरः प्रतिवेशिनि ! मम गृहाग्रे निवासिनि ! निवासं स्वीकर्तुं विवशास्मि । त्वं मम सर्वदा गृहे दृष्टिं स्थापयसि, यतस्त्वं मम गृहाग्रभागे वससि अतएवैकाकिनी रात्रौ कथं निवासं स्वीकरोमीति वाक्योऽर्थः । व्यङ्ग्यार्थस्तु—पुरः अग्रे (अस्याः प्रतिवेशिन्याः संमुखे) तव रात्रिनिवासं स्वीकर्तुं कथं शक्नोमि । अतएवाहमुपरिता प्रति-यिष्यामि, अस्यां गतायां तव निवासो भवावश्यकः, यतोऽहं 'विजनविनेयनिशास्मि ।' इति ॥ ५ ॥

पथिकः—न परिजनापेक्षा सुमुखि ! पथिकजनाय निशेति ।
दूरपरिश्रान्तोऽधुना पान्थो वसतिमर्थति ॥ ६ ॥

गृहे परिजनो नास्ति, अतएवागन्तुकस्यावश्यककार्यं कः पूरयिष्यतीत्यर्थं ज्ञात्वा, पथिकः प्रत्याह—हे सुमुखि ! (यद्यपि स्वमुखं विलोकितुं तत एव

त्वदायत्तोऽस्मीति ध्वन्यते ।) निशा रात्रिरस्तीति, पथिकजनाय परिजनस्यापेक्षा नास्ति रात्रौ शयनं विहाय नान्यत्कार्यम्, अतएव परिजनो नापेक्ष्यत इत्यर्थः । अतिपरिश्रान्तः पथिकः साम्प्रतं निवासमेव अर्हतीति जानाति । अहं न कालविलम्बं सहे, अत एव निवासस्वीकार एवावश्यक इति सूच्यते ॥ ६ ॥

सुन्द०—संनिहितो न हि गृहपतिश्चलितोऽथ परिजनोपि ।
भवतो भवतु कथं स्थितिर्न पुनरितोऽन्यः कोपि ॥ ७ ॥

गृहस्य पतिः भर्ता अत्र नास्ति । अनेन 'गृहमात्रस्य स स्वामी न मम हृदयस्येति सूच्यते । परिजनोपि गतः । इतः अस्मिन् स्थाने । संनिहितो चलितो' इत्यादचतुर्ष्वपि पादेषु प्रासाः ॥ ७ ॥

पथि०—उपनतघनजाले जलदकाले कोपि न याति ।
जनरहिता शालेयमिति बाले ! नवमिव भाति ॥ ८ ॥

उपनतं घनजालं यस्मिन् घनघटाऽऽच्छन्ने इत्यर्थः । प्रायः ईदृशे समये यात्रा निषिद्धा, अतएव ईदृशे समये इयं शाला (भवनम्) जनरहितेति मे मनसि नवीनमिव भाति प्रतीयते । बाले ! इति संबुद्ध्या बालां भवादृशीं विहाय सोऽस्मिन्समये प्रोषित इति सत्यं स केवलं गृहपतिरेवेति ध्वन्यते । बालामनङ्ग सदने विषयसुखानां तदिदमारभ्य पथिकेनेति बोद्धव्यम् ॥ ८ ॥

सुन्द०—चिरतीर्थव्यसनी पतिर्जरती परमश्रुधेति ।
युवती स्वहमेकाकिनी कियतीयं विपदेति ॥ ९ ॥

कथमस्मिन्समये स प्रोषित इति तदुत्तरे सखेदमाह—पतिः चिरात् तीर्थयात्राव्यसनी । परिवर्तेन स केवलं मां रक्षत्येव न पुनर्मोदयतीति खेदो व्यञ्जितः । जरती वृद्धा श्वश्रूः, परम् अत्यन्तं अश्रुधा अन्धा इति । सा वृद्धा सम्प्रति नानुभवशालिनी, अतएवास्मिन्समये स्वसुतं प्रवासयति । अनेन, इमां वृद्धां दृष्ट्वा न संकुचितव्यम्—यत इयं महामूढेति स्पष्टमभिव्य-

षम् । जरतीपदेन तस्याननास्था च ध्वनिता । युवती अहम् एकाकिनी अस्मि इयं विपद् जरती छिद्रमार्गणा इति आगच्छति । दीर्घयात्रया प्रोषितपतिर्युवत्या मम मेघकालेऽस्मिन्समुपस्थितेति तमेवानुयाहि । विरती जरतीत्यादयः पञ्चस्वपि चरणेषु भासाः ॥ ९ ॥

पथि०—हन्त न किल सन्ततमहं सुदति ! वसतिमिच्छामि ।
निशि निवासमपि नो दिशसि निभृतमुषसि गच्छामि ॥१०॥

पतिस्तीर्थे गतः, जरती भ्रष्टेति दीर्घां गृहकथां त्वयारब्धेत्याह—अहं संततं सर्वदा निवासं नेच्छामि । अपि तु केवलमेकस्यां रात्रौ नो दिशसि, न ददासि । उषसि प्रातः निभृतं निःशब्दं गच्छामि गमिष्यामि, न पुनरत्र निवासं याचिष्ये इति वाक्यार्थः । व्यङ्ग्यार्थस्तु, रात्रौ मम निवासो न कस्यचिद्विदितो भवेद्यतः, अतिप्रातःकाले निःशब्दं यास्यामीति न त्वया भेतव्यमिति ॥ १० ॥

सुन्द०—जाने पथि सखि ! संकटान् स्थितिदानेऽपि बिभेमि ।
निशि निवासयामे जने प्रतिवेशिनि ! किमुपैमि ॥ ११ ॥

मार्गे वर्षाकालेऽस्मिन् संकटान् क्लेशानहं जानामि, परं सखि ! स्थितेर्निवासस्य दानेऽपि बिभेमि । मार्गक्लेशान् बुद्ध्वापि निवासदाने लोकेभ्योऽहं बिभेमीति सूच्यते । निशि रात्रौ निवासम् (दत्तोः) यामे पश्चे लोकेऽहं किमुपैमि, किं करोमि ? यदि रात्रौ वासयामि, तर्हि लोकाः सर्वेऽपि (प्रतिवेश्यादयः) वक्र भविष्यन्तीत्याशयः ॥ ११ ॥

पथि०—इममलिन्दमरविन्दमुखि ! यदि सहसेऽधिवसामि ।
ग्रामलोकलोचनविषयमपि वद कथमुपयामि ॥ १२ ॥

दृष्ट्वा लोका यतः भविष्यन्तीत्युत्तरे आह—हे कमलमुखि ! यदि सहसे मर्षयसे, तर्हि इमम् अङ्गुल्या निर्दिश्य अलिन्दम् द्वारसमीपवर्तिकोष्ठम्, ('पौली') अधिवसामि । एवंकृते—ग्रामस्य लोकस्य लोचनविषयं कथं गच्छामि, यदस्मिन् निभृतप्रकोष्ठे वासयसि तर्हि लोकाः कथं पश्ये-

सुरितस्तद्यो व्यङ्ग्यः । वाच्यस्तु—अलिन्दे शयानं मां दृष्ट्वा लोकाः कथं यत्र भवेयुर्यतोऽहं बहिर्द्वारसमीपे स्थास्यामीति ॥ १२ ॥

सुन्द०—अ(ना)स्तरणमलिन्दतलमन्धकारबहुलं तु ।
सखि ! सुखमन्या वसतयः पथिकसुखाय भवन्तु ॥१३॥

अलिन्दतलम् आस्तरणरहितम्, बहुलान्धकारम् । अस्ति अत एव तव क्लेशो भवेदिति वाच्योऽर्थः । अन्धकारे लोकरहिते निर्भयस्पर्शमनाभावे किं करिष्यसीति पूर्वत एव विचारयेति व्यङ्ग्योऽर्थः । अन्या वसतयः अन्यानि निवासस्थानानि, पथिकसुखाय सुखं यथा तथा आयन्ताम् । यत्र सुखं तेऽभिप्रेतं, यदीदृशे अलिन्दे तव सुखं संभवति तर्हि सन्निहितम्, अन्यथा त्वह निवसेत्याशयः ॥ १३ ॥

पथि०—वियति निस्तृताऽम्बुदघटा, वहति पूर्वपवनोऽपि ।
महति विप्रकर्षे भवेत्सुदति ! सुखदवासोऽपि ॥ १४ ॥

सुखं मे भवेदिति त्वं कथयसि, तर्हि पश्य, वियति आकाशे मेघघटा सर्वतः प्रसृता । सुखदो निवासो महति विप्रकर्षे अतिदूरे भवेत् । यदि मम सुखं पृच्छसि, तर्हि प्रवासाद्विनिवृत्य गृहं गतस्यैव मम प्रियतमासमागमात्सुखदो वासो भवेत् । अत एवातिदूरागतस्य घनघटाच्छादितायामस्यां रजन्यां, अत्रैव सुखदो वासोऽस्त्वित्याशयः । वियति वहतीत्यादयमनुस्वैरि पादेषु नियमतोऽनुप्रासः ॥ १४ ॥

सुन्द०—त्यज निवासनिर्बन्धमयि व्रज निपुणं किमु शास्मि ।
अजनि पयोधरमन्दता रजनिरियं विपन्नास्मि ॥ १५ ॥

एतावदुक्तेऽपि न निवासाग्रहाद्विरमतीति किंचित्कुप्यन्तीव मनिवेशिनी-मनुरक्ता सारान्धिकमेवाह—अयि ! निवासस्य इमं निर्बन्धमाग्रहं त्यज । इतो व्रज, गच्छ । निपुणं त्वामहं किं वदामि । अहं दुर्वचनकारिणी इयं च रात्रिरिति लोकमर्यादामनुसृत्य किमहं वदामीति वाच्योऽर्थः । एतावदुक्तेऽपि निपुणं त्वामत्यन्तपयोधरं किं वर्णयामि व्यङ्ग्यः । इयं रजनिः

पयोधरैः मेघैः संनता व्याप्ता सजनि जाता । अतएवास्मिन्नन्धकारे तवागन्तुकं पुरुषं किमधिकं संलक्षयामि । अत एव निवासने अहं विवशास्मि । सखत्वस्तु—पयोधरयोः सततं रोमाञ्चकम्पादिवशादसहनता सजनि जाता । सद्+ख+ता । मदनदीपितमदनतया पुलकितस्विन्नपयोधरा जाता । इयं च रजनिः (अर्थात् नितरां कामं प्रदीपयति।) अत एवाहं विवशास्मि, मादृशं सोढुं पारयामीत्याशयः। सजनि भजनि मजनि इत्यादयमनुप्रासाः ॥१५॥

*   *   *   *

इति संलपतोरेतयोस्त्वरितो वारिधरोऽपि ।
जवतो वर्षितुमापतत्सरितो धरणिरलोपि ॥ १६ ॥

एवं तयोः (सुन्दरीपथिकयोः) संलापं कुर्वतोरेव त्वरायुक्तो मेघः, वेगात् वर्षितुमापतत्, सहसाऽगमत् । तथा च मेघो वर्षणमारब्धः यथा वायुमिश्रितजलेन पर्यन्ततः पृथिवी लुप्ता । एवं च, न कोऽपि द्रष्टुं पारयेदिति पथिकनिवाससौकर्यं सूचितम् ॥ १६ ॥

प्रतिवेशनमनुपदमियं प्रतिवेशिन्ययति स्म ।
युवतिरसावविशद् गृहं पथिकोपि च विशति स्म ॥१७॥

वृष्टिभयात् इयं प्रतिवेशिनी, प्रतिवेशनं गृहम्, अयति गच्छति स्म । इयं युवतिरपि निजगृहमविशत् । अस्मिन्नवसरे पथिकोऽपि पूर्वोक्तसुन्दर्याः गृहं विशति स्म ॥ १७ ॥

सो०—युवतिविलासमवेक्ष्य, द्रवति घनोपि मनो विना ।
चलति ललितमनवेक्ष्य, वदतिरसिकपथिकः कथम्॥१८॥

मनो विना, मनसा शून्यः, अचेतन इति यावत् । मेघोऽपि युवत्या विलासं दृष्ट्वा द्रवति द्रुतहृदयो भवति अतएव सदैवागतत् वारये द्रु वर्षति । यदाऽचेतनस्यैवं दशा, तद् तदा अतिरसिकः पथिकः, ललितं (युवत्या विलासम्) अनवेक्ष्य अननुभूय कथं चलति ? अपि तु न चलति । विलासानुभवार्थमेव ॥ सुन्दरीसदनं प्राविशदित्यर्थः ॥ १८ ॥



पद्यर' प्रसङ्गादुपजातानि पद्यानि, उपदिश्यन्ते तावत्। भाषानुकूलो भाव, उभयार्थयोरन्त्यानुप्रास (तुकान्त), संस्कृतभाषायामेतावच्छन्द, इत्यादि सर्वं सकलजातमवधार्यैव समीक्षणीयं भवेत्सहृदयैरिति स्वनाशश्यकमेव निवेदन निपुणेषु।

## मङ्गलम्

भवबाधामपनयतु मे, राधा सा मतिधाम।
श्यामो हरितद्युतिमयति, यत्तनुकान्त्या नाम॥ १॥

१—मतिधाम, बुद्धेर्विश्रामस्थानम् (अक्लङ्कम्), अर्थात् भवबाधाहरणे मतिमयीणा (नागरी) सा राधा, मे भवबाधां जन्ममरणपीडाम्

अपनयतु नाम (पादपूरणार्थकम्) यस्याः (राधायाः) तनुकान्त्या शरीरस्य द्युत्या। श्यामः श्रीकृष्णः (व्रजभाषोचिता संज्ञा)। हरितद्युतिः प्रसन्नमुखशोभायुक्तो भवति। यस्यां श्रीराधायां समीपमागतायामिव श्रीकृष्णो म्लानिं विहाय पुनर्नवतां धारयति, सा राधा अस्माकं (भक्तानाम्) सांसारिकदुःखसम्पत्तिमपनयत्विति भावः। अथ 'हरित'पदम् भाषाप्रयोगानुसारं ['हरा भरा'] इत्याशयमादाय अतिप्रसन्नतार्थकम्। यथा—"मित्रं दृष्ट्वा तापसंतप्तोऽपि नरो हरितो ('हरा') भवति।"

२—'हरित'पदस्य हरितवर्णमादाय द्वितीयोऽप्यर्थो भवति। यस्या राधायाश्चम्पकपुष्पपीतवर्णया तनुकान्त्या श्यामः, कृष्णवर्णोऽपि श्रीकृष्णो हरितो हरिद्राभां द्युतिं धारयति, सा राधा। श्यामपीतयोः संमेलनेन हरितो वर्ण उत्पद्यत इति सुप्रसिद्धम्। एवं च—पीतश्यामयोः संयोगेन यथा अपूर्वो हरितो वर्ण उत्पद्यते, एवम् राधिकाकृष्णयोरुभयोरनयोः परस्परसहभावमयस्वरूप उपासनया चित्तमलं शोधयतां साधकानामपि अपूर्वा काचिच्छान्तिरुत्पद्यत इति व्यज्यते।

३—यस्यास्तनुकान्त्या शरीरध्यानेन कान्तिरिच्छा (अतएव ध्यानम्), अर्थात् यस्या राधायाः स्वहृदयमन्दिरे ध्यानोपासनया श्यामवर्णः कलपातकादिश्यामपदार्थः (पातकस्य वर्णः श्यामः), भाषार्थानुसारं 'हरितद्युति' हतद्युति (निष्प्रभम्) भवति, सा राधेत्यप्यर्थः कैश्चिट्टीकाकृद्भिः कृतः, परं सोऽयं केवलं विहारिणि अतिभक्तिसूचकमात्रं हठादाकर्षणं निदर्शयति।

अपि च (हिन्दीपद्ये 'झाँई' 'हरित' शब्दावनेकार्थकौ। 'झाँई' पदार्थौ (१) झाँई झलक। (२) ध्यानपदस्यापभ्रंशेन 'झाँस' स्वरूपमादाय क्रमशः 'झाँई' इति निष्पन्नस्य 'ध्यानम्' इति तृतीयोऽर्थः कष्टकल्पनया कल्प्यते।

ममानुवादपद्ये तु 'यत्तनुकान्त्या' अत्र कान्तिपदस्य 'कान्तिः' दीप्तिः प्रकाशः, 'कान्तिः' शोभा, 'कान्तिः' इच्छा, इत्यर्थत्रयं सर्वत्र सुप्रसिद्धमनायासेन सङ्गच्छते। तथा च—यस्या राधायास्तनुकान्त्या शरीरशोभया कृष्णो हरितः प्रसन्नो भवति। (१)

२—यस्या राधायास्तनुकान्त्या शरीरदीप्त्या (प्रकाशेन) श्यामवर्णः श्रीकृष्णः, हरितो हरितवर्णविशिष्टो भवति।

३—यस्यास्तनुकान्त्या शरीरस्य कामनया 'मम हृदयरूपमहाधारकमले श्रीराधामूर्तिराविर्भवतु' इति ध्यानेन श्यामवर्णः पातकादिरपवर्गप्रतिकूलः प्रत्यूहः 'भावाँशस्यनुसारम्' हतद्युतिर्भवति।

यावदभिलषितः (श्लिष्टोऽश्लिष्टश्च) अर्थः सर्वोऽप्यक्षरेभ्यो निःसरतीति स्वानुभवं प्रेक्षावताम्। किञ्च 'बाधा' 'राधा' इति पूर्वार्धगतोऽनुप्रासोऽपि यथायथमाविर्भूय 'मनिधाम' इत्यक्षरैः माकमधिकां रुचिं पुष्णाति।

कश्चिदस्य पद्यस्य श्लिष्टपरम्, कश्चिच्च सुखपरिहास ('मुहासे') हृत्वा-योग ('मुरली') परम्, अर्थमुन्नाययति, सर्वेऽनन्तोऽनुभवमात्रमेयेति को न जानीयात्।

'अपनय भवबाधामयं राधे त्वं कुलकामिनि।
हरिरपि भवति हरिद्युतिर्यदि माधवमुपयासि॥'

इत्थमर्थसमृद्धिभाजः परमानन्दपरिप्लुतस्यानुवादे तु कानुमानः? किमर्थश्च 'हरित्' पदस्य 'हरितवर्ण' रूपोऽर्थः न प्रसिद्धः? एकाभिधेयस्य 'हरि' 'माधव' पदद्वयस्य, एकत्र समावेशे को गुणः? इत्यादि बहु विचारणीयम्। किञ्च—प्रथममात्र एव प्रतिकारात्मकं सोपद्, यद्—'राधा नागरि सोइ' सा राधा नागरी। इति प्रथमपुरुषस्य 'हे राधे!' इति मध्यमपुरुषरूपकरणं परमानन्दस्योत्तमपुरुषता न सूपपद्यते।

भक्तिमरीचिकाकारः, 'बी-ए' उपाधिधारी रमाकान्तमामा अगाधायद्यासोऽपि अस्य पद्यस्य हिन्दी टीकायां "(हे बड़ी राधा नागरी! मेरी भवबाधा हरो।) इत्यर्थं कुर्वन् सहृदयैः भाव्यः: 'राधा नागरी सोइ' (सा नागरी राधा।) मे भवबाधां 'हरो' (हरतु) इत्यर्थे प्रत्यक्षं रूपमाने (हे सा राधानागरि!) इति चतुर्दशभुवनेषु कस्य भुवनस्य प्रयोगः? लोके वेदे, हिन्दीसंस्कृतयोरुभयत्रापि 'स्वरादेः संबोधनं भाषी'ति प्रसिद्धम्।

हरिप्रकाशादिषु केषुचिद्व्याख्यानेषु प्रौढिवादेन श्लोकोऽप्ययमर्थः ('सोय' को अर्थ, वेद पुराण पुकारी स्तुति करी है) इति अवश्यमितरूपार्थेन वाक्यं

क्रियाऽतिशयेन साध्यते। परं "है वही राधा नागरी" इति प्रयोगस्तु नाद्यावधि श्रुतः। अस्तु रत्नाकरोऽपि क्षारतां कुत्रचित्प्रकटयत्येव।

आतपमात्रप्रकाशकेऽस्मिन्व्याख्यानेऽलङ्कारादिविचारस्तु न प्रस्तूयत इति सहृदयैः स्वयमन्यतोऽवसेयम्।

→ श्रीकृष्णशोभावर्णनम् ←

शिरसि मुकुटमधिकटि ललितपटो, वेणुरधिपाणि।
मालोरसि, तावकमिदं रूपं हृदि करवाणि ॥ २ ॥

हे हरे! शिरसि मुकुटम्, अधिकटि कटिदेशे ललितः पटः, मनोधारणीय वस्त्रमित्यर्थः। अधिपाणि पाणौ वेणुः (वंशी), उरसि माला (वैजयन्ती)। सर्वत्र 'अस्ति'इत्यध्याहार्यम्। इदं पूर्वोपरिवर्णितं तावकं रूपं हृदये धारयामि। एतादृशं रूपं सदा मम हृदये वसेदिति आशास्ते। आशीरिति शेषः ॥२॥

राजति गुञ्जामालिका वक्षसि मुरमथनस्य।
लसति निःसरन्ती बहिःशिखेव दवदहनस्य ॥ ३ ॥

वनवासिनो रक्षणसमये पीतस्य दावानलस्य बहिर्निःसरन्ती शिखा इव ज्वाला इव लसति। गुञ्जामाला यथा श्यामलोहिता भवति। एवम्, अन्तेऽपि ज्वाला रक्ता, धूमसम्बन्धेन कृष्णा च भवतीति द्वयोः साम्यम् ॥ ३ ॥

श्याममधुरमूर्तिर्हरिः पीतपटेन विभाति।
उषसि नीलमणिशैल इव बालातपेऽभियाति ॥ ४ ॥

---

'सीस मुकुट कटि काछनी, कर मुरली, उर माल।
इहि बानिक मो मन बसौ सदा बिहारीलाल ॥ २ ॥'
'सखि ! सोहत गोपाल के उर गुञ्जन की माल।
बाहिर लसत मनो पिये दावानल की ज्वाल ॥ ३ ॥'
'सोहत ओढ़ें पीत पट स्याम सलौने गात।
मनौ नीलमनि सैल पर आतप पर्यो प्रभात ॥ ४ ॥'

उषसि बालातपे, उद्यतः सूर्यस्य अरुणे प्रकाशे अभियाति आगच्छति (प्राप्नुवति सति) नीलमणिशैल इव श्यामो हरिः पीताम्बरेण विभाति। 'आतपपन्थो प्रभात' इत्यस्य 'उष्णकरकोमलकरनिचयेन' इति परमानन्दानुवादे तु उषसि सूर्ये उष्णकरता, आतपस्य करनिचय इति कदर्थनमुभयमपि स्थूलम्। पीतातपे न यथा पीताम्बरसाम्यम्, तथा स्वल्पमितैः किरणैर्न परितः परिहितस्य पीतपटस्य साम्यम् ॥ ४ ॥

श्रवसि हरेः कुण्डलमिदं दीव्यति मकराकारि ।
हृदयसदनमविशत्स्मरो लसति केतनं द्वारि ॥ ५ ॥

हरेः श्रवसि कर्णे, मकररूप् आकारो यस्य तादृशमिदं कुण्डलं शोभते। अत्र गम्योत्प्रेक्षा पुनरुक्ति—स्मरः कामः कृष्णस्य हृदयरूपं सदनं प्राविशत् प्रवेशात्स्य द्वारे च यस्य चिह्नभूतं केतनं (ध्वजः) लसति। कामस्य मकर एव ध्वजः। श्रीकृष्णस्य शोभां वर्णयित्वा दूती कृष्णेन सह कांचन नायिकां संगमयितुमिच्छति। तया च कर्णद्वारा तस्य रूपगुणादिशोभामाकर्ण्य सोऽयं हृदये कामाय स्थानं दत्तवानत एव एतादृशेऽनुकूले नायके तव एना रुचिः स्यादिति व्यङ्ग्यम्। अत्र 'गुरुनिमित्तम्' अनुप्रस्तुतार्थः—मनोगृहस्याधिकारी राजा स्मरः साम्प्रतं स्वदुर्गेऽस्मीति सूचकं चिह्नभूतं केतनं द्वारि लसति। (जब राजा किलेके अन्दर होता है तो इस बातकी सूचनाके लिये, बाहर झंडा फहराता रहता है) इत्यादि अर्थं प्राधान्येन—आह। एवं नेदं विहारिणोऽर्थानुगुणम्। 'प्रविशत्' इति पदेन हृदये कामस्य प्रवेशो विधेयत्वेन वर्ण्यते, प्रागीदृशं स तत्र अत एव दूत्या सखीं प्रति—त्वद्गुणश्रवणेन सांप्रतं त्वदनुरागी जातः, कामप्रादुर्भावोऽस्य इति व्यज्यते। पूर्वमेव कामस्याधिकारे तु किं प्रारम्भम्? उक्तमपि पूर्वानुरागे—"श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः" इत्यादि। नायिका प्राप्तुमिच्छति नायिकया एव हृदयेऽधिकारो पर्णेयितुमुचितोऽपि कामस्तु तत्र सहायक एव। हृदयाधिकारिणी तु नायिकैव स्यात् स्थाने कविना विवक्षितम् ॥ ५ ॥

---

'मकराकृति गोपालके कुंडल सोहत कान ।
धस्यो मनो हियघर समर ड्योढ़ी लसत निसान ॥ ५ ॥'

बर्हिमुकुटचन्द्रकचयैर्मधुरिपुरिति परिभाति ।
शशिशेखरविजिगीषया शशिशतमिव निदधाति ॥ ६ ॥

बर्हं (मयूरपिच्छ) मुकुटस्य चन्द्रकचयैः (चन्द्राकारैः पिच्छशिरोदेशैः) मधुरिपुः कृष्णः, इति इव शोभते । शशिशेखरस्य (शिवस्य) विजयेच्छया शेखरे चन्द्रशतं निदधाति इव । शिवेन केवलमेकश्चन्द्रः (सोऽपि खण्डितः) शिरसि धारितः, कृष्णस्तु चन्द्रशतमिव धारयतीति भावः ॥ ६ ॥

पीतपटाधरदृक्छटाविच्छुरिता हरिताऽपि ।
अधरधृता हरिमुरलिका सुरपतिधनुरिव भाति ॥ ७ ॥

पीताम्बरस्य, अधरस्य, दृशोः (नेत्रयोः) च, छटया कान्त्या विच्छुरिता मिलिता, स्वयं च पूर्वत एव हरितवंशनिर्मितत्वात् हरितवर्णा हरेः अधरधृता, हरेर्मुरलिका । पूर्वोक्तैर्वर्णैः, इन्द्रस्य धनुरिव भाति । श्रीकृष्णे मुरलिकामधरे धारयति सति, कृष्णधारितस्य पीताम्बरस्य पीता, अधरस्य शोणा, दृशोश्च पाटला श्यामा वा, कान्तिस्तत्र परिपतति । स्वयं हरितवर्णैस्तु मुरलिकायामस्त्येवेति नानावर्णैः सा इन्द्रधनुरिव शोभते । शब्दालङ्कारो भाषायामत्र च, यस्य विशेषतो बन्धुरयति ॥ ७ ॥

→ मुग्धाया वयःसन्धिः ←

गता न शिशुताद्युतिरितो यौवनमङ्गमुपैति ।
द्विविधरङ्गकौशेयमिव तनुराभ्यां रुचिमेति ॥ ८ ॥

---

'मोर मुकुटकी चन्द्रिकनि यों राजत नँदनन्द ।
मनु ससिसेखरकी अकस किय सेखर सतचन्द ॥ ६ ॥'
'अधर धरत हरिके परत ओठ-डीठि पट-जोति ।
हरित बाँसकी बाँसुरी इन्द्रधनुषसी होति ॥ ७ ॥'
'छुटी न सिसुताकी झलक झलक्यो जोबन अङ्ग ।
दीपति देह दुहून मिलि दिपति ताफता रङ्ग ॥ ८ ॥'

शैशवस्य द्युतिः न गता। शैशवं तु समाप्तम्, परं तस्यानिर्वचनीया काचिद् द्युतिरवशिष्यत एव, पूर्णतया न गतमित्यर्थः। इतः (पक्षान्तरे), यौवनम्, अङ्गम् (कर्मकारकम्) उप एति। समीपे आगच्छति स्पृशतीत्यर्थः। पूर्णतया यौवनस्यागमनं न किन्तु तस्य स्पर्श एव जातः। पूर्णतया बाल्यमपि न गतम्, यौवनमपि स्पष्टतया अङ्गेषु नोद्भूतमिति सोऽयं वयसोः सन्धिः। अतएव—द्विविधरङ्गयुक्तं कौशेयमिव धूपछांहरङ्गयुक्तं 'रेशमीवस्त्रम्' (इव) आभ्यां शैशवयौवनस्वर्णाभ्यां तनुः मुग्धायाः शरीरं रुचिम्, अनिर्वचनीयां शोभामेति। 'धूपछांया' नाम्ना प्रसिद्धे कौशेयवस्त्रे द्वाभ्यां रङ्गाभ्यां यथा शोभा, तथा मुग्धाया अङ्गे शैशवयौवनाभ्यां शोभा भवतीत्याशयः। 'द्विविधरागमम्बरमिव द्वैरूप्यं च दधाति।' इति परमानन्दस्तु वैरूप्यमेव प्रकाशितवान्। 'दुहून मिलि, ताफतारङ्ग दिपति' इति विहारिणोऽक्षरैः द्वावपि रङ्गौ एकत्र मिलिताविति भावः। न तु तत्र द्विरूपता। यथा 'धूपछांया' वस्त्रे द्वयोर्वर्णयोरेकीभावः॥ ८॥

सुतनुतिथौ कैशोररविरुदयति शुभपर्वेति।
वयःसन्धिसंक्रान्तिरतिपुण्यैः कस्यचिद्देति॥ ९॥

सुन्दरतनुयुक्ता मुग्धा नायिका एव तिथिस्तस्याम्। कैशोरं किशोरावस्थारूपो रविरुदेति, आगच्छति। शैशवाद्विनिर्गच्छति। इति। अस्मादेव हेतोरिदं शुभपर्व। द्वादशसु मासेषु, द्वादशनामभेदा द्वादश रविसङ्क्रान्तयः। एकस्य मासस्य समाप्तौ, एको रविर्निर्गच्छति द्वितीयश्चोदेति। एवं सुतनु(र्वी) रूपायां तिथौ शैशवनामको रविर्गच्छति कैशोरनामकश्च रविरुदेति, अयं द्वयोर्गमनागमनकालः अतिपुण्यः, अत एवेदं शुभपर्व। सोऽयं द्वयोर्वयसोः सन्धिः कस्यचिद्भाग्यवतः अतिपुण्यैरेव प्राप्यते। 'वयःसन्धि' पदानुरोधादेवंप्रकारेण वयोद्वयस्य समागम आवश्यकः। अतएवायमर्थ इति 'हरिप्रकाशः'। 'विहारिरत्नाकर'स्तु 'तियतिथि तरन-किशोर-वय' इति

'तिय तिथि तरनि-किसोरवय पुन्यकाल सम दौन।
काहू पुन्यन पाइयतु बैस संधि संक्रौन॥ १०॥'

पाठमाह। परं यदा 'तिय–तिथि' इति स्त्रियां तिथित्वमारोपितम्, एवं वयसि सूर्यत्वारोपं विना संक्रान्तिः न घटत इति दैन्य एव।

—अङ्कुरितयौवना मुग्धा—

बालाऽलौकिकशैशवं वीक्ष्य सखी सुखमेति।
एषु दिनेषु निरीक्ष्यतेऽङ्कुरितमुरसि समुदेति ॥ १० ॥

बालायाः अलौकिकम् अपूर्वम् (किशोरस्य+संभेदेनानुपमम्) शैशवं वीक्ष्य सखी प्रसन्ना भवति। आलापेष्वपि, उपलक्षणे एकत्वम्। सर्वा एव सख्यः सुखं प्राप्नुवन्ति। एषु दिनेषु तस्या उरसि, अङ्कुरितं वक्षोजयोरङ्कुरणम्, उदेति उद्गतानि दृश्यते ॥ १० ॥

—नवागतयौवना मुग्धा—

निजाङ्गानि मत्वाभिनवयौवननृपतिवरेण।
स्तन-नितम्बदृक्चेतसां रचितोन्नतिरचिरेण ॥ ११ ॥

अभिनवागतेन यौवनाभिधेन नृपतिवरेण, स्तननितम्बादीनि निजस्य अङ्गानि मत्वा, स्तनयोः नितम्बस्य दृशोः, चेतसश्च, अचिरेण उन्नतिः रचिता कृता। यौवनस्याविर्भावः स्तनादिष्वेव भवतीति एतानि स्वकीयानि मत्वा, यौवनभरेण स्तनयोस्तुङ्गतारूपा, नितम्बस्य घनविशालतारूपा, नयनयोश्चाञ्चल्यकटाक्षरूपा, मनसः शृङ्गारकामनासु प्रवृत्तिरूपा उन्नतिः कृता इति भावः। नवीनमधिकारं प्राप्य यथा कश्चिद्राजा स्वसहायकानां पदवृद्धिं करोत्येवं यौवननृपेण स्वाङ्गानामुन्नतिः कृतेत्याशयः। अत्र 'नयन-नितम्ब-स्तन-दृगाधिपं स दिदेश' इति परमानन्दानुवादे नयने अधिके जाते,

---

'लाल! अलौकिक लरकई लखि लखि सखी सिहाँति।
आज कालिहमें देखियत उर उकसौंहीं भाँति ॥ १० ॥'
'अपने अँगके जानिकै जोवन-नृपति प्रवीन।
स्तनमननैननितम्बको बड़ो इजाफा कीन ॥ ११ ॥'

त्रीणि नयनानि जातानि? नितम्बयोराधिक्यम्? त्रयश्चत्वारो वा नितम्बा जाताः? कोऽर्थः? आधिक्यस्य तथैवार्थत्वात् ॥ ११ ॥

नवललनातनुजनपदे यौवनसामन्तेन ।
कृतं वस्तु लघु गुरुतरम्, गुरु लघु कृतं बलेन ॥ १२ ॥

नवललनायाः तनुरूपे जनपदे देशे, यौवनरूपेण सामन्तेन प्रान्ताधिपतिरित्यादृश्यते राज्ञा, (कामचक्रवर्तिनाधीनेन) बलेन बलात्कारेण (अत्याचारेणेति यावत्) यद्वस्तु लघु तद् गुरुतरं कृतम्। यद् गुरु वस्तु आसीत्, तत् लघु कृतमिति सर्वत्र विशृङ्खला कृता। नवीनः कश्चित् शासको यदि देशेऽधिकारं प्राप्नोति, स च यदि बलात्कारे प्रवृत्तो भवति तदा, येषां भूम्यधिकारिणां देयः करो न्यूनो भवति तं वर्धयित्वा तानपि करोति येषां च देयोऽधिको भवति तम् (उत्कोचं गृहीत्वा) न्यूनं करोति। तथा च तान् भूम्यधिकृताननुगमयति एवं यौवनेन स्तननितम्बादीनां लघुत्वेऽपि गौरवमासादितम्। कटिमूर्ध्नेः पूर्वं गौरवेऽपि, गुरुत्वं लघुत्वं सम्पादितमित्याशयः। अत्रापि परमानन्दः 'यदि यौवनदेशाधिपस्तरुणीपुरं जगाम। तत्र गौरवं लाघवं द्वयोरपि रचयामास।' यदि चेदेवं स्यादिति संभावनास्ति, तत यौवनसामन्त आगतः? तत्र तरुणीपुरे गौरवं लाघवं रचयामास। अर्थात् लघुतरुणीपुरं गुरु चकार, गुरु तरुणीपुरं लघु चकार! समग्रं तरुणीपुरस्य मध्यवर्तीक्षको भवान् ॥ १२ ॥

यथा यथा स्तनपरिमितिर्यौवनशुचिदिवसेऽगति ।
वृद्धिमयति, कटिरजनिरपि तथा तथा क्षयमेति ॥ १३ ॥

यौवनरूपस्य शुचेर्ग्रीष्मस्य दिवसे। "ग्रीष्म ऊष्मकः शुचिस्त्वयम्" अमरः। यथा यथा स्तनरूपा परिमितिर्दिनमानम्, अति अत्यन्तं वृद्धिम्,

---

'नव नागरि-तन-मुलुक लहि जोबन-आमिल जोर।
घटि बढ़ि तैं बढ़ि घटि रकम करी और की और ॥ १२ ॥'
'ज्यौं ज्यौं जोबन-जेठ दिन कुच मिति अति अधिकाति।
त्यौं त्यौं छिन छिन कटि छपा छीन परति नित जाति ॥ १३ ॥'

भयति (याति), तथा तथा कटिरूपा रात्रिः क्षयं गच्छति। ज्येष्ठमासे प्रतिदिनं दिनमानं वर्धते सर्वतोऽधिकां च वृद्धिं याति, रात्रिस्तु प्रतिदिनं क्षीयते। एवमेव यौवनरूपे ज्येष्ठमासे कुचरूपस्य दिनस्य मानं (परिमाणम् आकारः) क्रमशो वर्द्धते। रात्रिवत् कटिस्तु अत्यन्तं क्षीयते। अहो! मदनोष्मस्फटेन यौवनेन सह प्रचण्डज्येष्ठस्य रूपणं सम्यगेव ॥ १३ ॥

उरसिजभारो भवदुरसि यौवनभरतो भाति।
सरति सपत्नीहृदि, भराच्छ्वासः कठिनतयाऽति ॥ १४ ॥

हे सखि! भवत्याः उरसि, यौवनभरात् (पूर्णयौवनात्) उरसिजयोर्भारः (पूर्णता) भाति, तस्य भारात् सपत्नीनां हृदये, श्वासः अतिकठिनतया सरति आगच्छति। मांसलयोः कुचयोर्भरस्तव हृदये भाति। परं तद्भारस्य खेदात् सपत्नीनां हृदये श्वासः, अतिक्लेशात् प्रतिक्षणं रुध्यमान इवागच्छतीत्यसङ्गतिः। मूले यथा तथाऽलङ्कारस्यैवेहाप्यवलोकयः। नायिकां प्रति सख्या उक्तिः ॥ १४ ॥

ज्ञातयौवना मुग्धा

मांसलतामनुगतमिदं किञ्चिदङ्कुरितकेन।
निभालयति बालाऽविरतमुरो हारकपटेन ॥ १५ ॥

किञ्चिदङ्कुरितकेन किञ्चित् कुचयोरङ्कुरणेन, भावार्थे कन्। मांसलतामनुगतम्, किञ्चिन्मांसलतां प्रति अवतीर्णम्। स्पष्टं कुचयोरङ्कुरणं न जातं किन्तु उरसि किञ्चिन्मांसलता आरब्धेत्याशयः। एतादृशम् उरः (वक्षःस्थलम्) सा बाला, शुक्तिनिर्मितस्य हारस्य दर्शनव्याजेन अविरतं पश्यति। अङ्कुरितकुचं स्वं वक्षःस्थलं नायिका पश्यति, परं किं पश्यसीति सखीभिः पृष्टे सति, हारदर्शनेन, तदपह्नुते इत्याशयः। लोमविन्दुं नायकं प्रति सख्या उक्तिः ॥१५॥

---

'बाढ़त तो उर उरज भर भरि तरुनई विकास।
बोझनि सौतिनि के हिये आवत रूँधि उसास ॥ १४ ॥'
'भावक उभरौहौं भयो, कछुक पर्यो भरुआय।
सीपहरा के मिस हियो निसिदिन हेरत जाय ॥ १५ ॥'

## ॥ नवोढा मुग्धा ॥

वधूवपुषि यौवनविभा यथा यथा समुदेति ।
सकलसपत्नीमुखविभा तथा तथा क्षतिमेति ॥ १६ ॥

नववध्वाः शरीरे यौवनस्य द्युतिः यथा यथा सम्यक् उदेति, वर्धते । तथा तथा सकलसपत्नीनां मुखकान्तिः क्षीणा भवति । एतादृशीं नवयौवनां विहाय, अस्मान्कथं दयितः प्रणयेदिति सपत्न्यो विषीदन्तीत्यर्थः ॥ १६ ॥

नववधु! तव मुखदर्शने श्वश्र्वा गृहमचिरेण ।
सपत्नीभिरपि सौभगं दत्तं मनः प्रियेण ॥ १७ ॥

नायिकां प्रति सख्याः सपरिहासमुक्तिः—हे नवोढे! तव मुखदर्शनोपलक्ष्ये, श्वश्र्वा (प्रियतमजनन्या), गृहम्, प्रियतमेन मनः, सपत्नीभिः आत्मनः सौभाग्यम् दत्तम् । नववधूर्यदा पतिगृहे प्रथमप्रथममायाति, तदा आत्मीयजनाः प्रथममुखदर्शने नववध्वै किञ्चिदुपहारं ददति ('मुख दिखावनी') । तदेवाह—यद् त्वां रूपगुणशालिनीं विलोक्यैव श्वश्रूस्तुभ्यं सर्वं गृहकर्तृत्वं समर्पितवती । प्रियस्तु मुखदर्शन एव सर्वस्वं स्वमनस्तुभ्यं दत्तवान् । सपत्नीनां सन्निधे न गृहमात्र आसीत् । नापि मनः, तत्तु प्रियतमसादासीत् । अत एव प्रियतमकृतं स्वसौभाग्यं (पतिप्रेम) आसीत्तदेव दत्तम् । अर्थात् अग्रे प्रियतमस्त्वामेव दयितां करिष्यति, वयं तु दर्शनमात्रेऽपि कदाचिदेवाधिकारिण्यो भविष्याम इति । सख्याः सखीं प्रत्युक्तौ तु—'नववध्वा मुखदर्शने' इति पाठः । नववध्वा इति षष्ठी ॥ १७ ॥

---

'देह दुलहिया की बढ़ै ज्यौं ज्यौं जोबन जोति ।
त्यौं त्यौं लखि सौतैं सबै बदन मलिन दुति होति ॥ १६ ॥'

'मुँह दिखरावनी दुलहिनि करि अनुराग ।
सासु सदन मन ललन हू सौतिनि दियौ सुहाग ॥ १७ ॥'

सलज्जा मध्या

रते हरति वसनं प्रिये, दीपे ज्वलति पुरोऽपि ।
उदितदेहदीप्तित्विषा, ह्रीरियमतुलमगोपि ॥ १८ ॥

सुरते, प्रियतमे वसनमपनयति सति, पुरः संमुखे दीपे ज्वलति अपि । दीपकस्य प्रकाशेऽपीत्यर्थः । वस्त्रापनयनेन उदितया, सम्यक् प्रसृतया देहदीप्तेः देहशोभायाः, त्विषा प्रसरणशीलेन प्रकाशेन, वस्त्रापहरणसमये गच्छन्ती इयं ह्रीः लज्जा, अतुलम् अनुपमम् (सम्यक् यथा स्यात्तथा) अगोपि रक्षिता । पक्षे शरीरादपसरत्येव नायिकायाः शरीरकान्तेरेव ईदृशः प्रकाशस्तस्याः शरीरमाच्छादयामास, येन नायकस्य दृष्टिस्तस्मिन् न सम्यक्पतितुं शशाक । अत एव लज्जा सुरक्षिताऽभवदित्यर्थः ॥ १८ ॥

समानलज्जाकामा मध्या

त्यजति न लज्जां लालसां पितृसदने प्रियमेक्ष्य ।
ससंकोचरति लोचनं ताम्यति रीतिमपेक्ष्य ॥ १९ ॥

पितृगृहे भासम्, प्रियम् आ—ईक्ष्य, लज्जामपि न त्यजति, लालसामपि न मुञ्चति । जनकगृहे स्थिता कथं लज्जां विहाय प्रियं पश्येदिति लज्जा । रात्रिंदिवा यस्य हृदि ध्यानमासीत्स एव प्राणवल्लभः समायात इति दर्शनलालसा । उभयमपि समानबलत्वान्न त्यक्तुं शक्यत इत्यर्थः । अतएव— संकोच, रतिः (स्नेहः) आभ्यां सहितं लोचनम्, पितृगृहनिवासस्य सलज्जां रीतिं अपेक्ष्य अनुरुध्य, ताम्यति व्याकुलं भवति । एकव्यक्त्युपस्थगमात्रम् । द्वयोर्नेत्रयोरभिप्रायः ॥ १९ ॥

---

'दीप उजेरेहू पतिहि हरत बसन रतिकाज ।
रही लपटि छबि की छटनि, नैको छुटी न लाज ॥ १८ ॥'
'छुटै न लाज न लालचो प्यो लखि नैहर गेह ।
सटपटात लोचन खरे, भरे सँकोच सनेह ॥ १९ ॥'

→ समदनोन्मादा प्रौढा ←

वीक्ष्य मानशयितां प्रियो दयितामनु सुष्वाप ।
स्वप्नमिलनमिषतः प्रियाहृदयालिङ्गनमाप ॥ २० ॥

प्रियः, प्रियां मानकोपात् शयितां वीक्ष्य, दयितामनु दयितायाः समीपे सुषुप्वान्। अनुनयं स्वीकुर्यान्न वा इति विचार्य तस्याः समीपे प्रियः सुष्वापेत्यर्थः। प्रिया, स्वप्ने यन्मिलनम् (अर्थात् शयानया नायिकया कश्चित्स्वप्नो दृष्टोऽस्ति, तस्मिन्नेव सा मिलतीति) मेलनस्य मिषात्, प्रियतमस्य हृदयालिङ्गनं प्राप। 'पुनरपि मिलनं तथा कदाचिदितिपद्, गाढकुटाद्विरितिसूत्रे कुटस्यादिः कुटादिरिति कृत्वा मिलनमिति आपामापुपांनुरोधात्स्वीकार्यम्। दयितोऽपि मानुनीतवान्। इयमपि 'विनाऽनुनयं मानस्त्यक्त' इति स्वस्थापयं माङ्गीचकार, युक्त्या सर्वं कार्यं साधितवतीत्यर्थः ॥ २० ॥

→ कुलवधूः ←

वदति न देवरदुर्मतिं कुलजा कलहभयेन ।
मार्जारान्तिकपञ्जरे शुकीव शुष्यति तेन ॥ २१ ॥

निजोपरि आसक्तो देवरः कामातुरतया यां दुर्मतिं धत्ते, तां कुलोत्पन्ना सा, द्वयोर्भ्रात्रोर्मध्ये कलहो भवेदिति भयेन न कथयति। तेन, एतेन दुःखभरेण एव सदनरूपेण, दुःखस्य पुरस्कारेण। मार्जारस्य अन्तिके स्थापितो यः पञ्जरस्तस्मिन् स्थिता शुकी इव, प्रतिदिनं शुष्यति कृशा भवति ॥ २१ ॥

---

'सोवत लखि मन मान धरि, ढिग सोयो प्यौ आय ।
रही सुपन की मिलन मिलि तिय हिय सौं लपटाय ॥ २० ॥'
'कहति न देवरकी कुमति कुलतिय कलह डराय ।
पंजरगत मंजार ढिग सुक ज्यौं सूकति जाय ॥ २१ ॥'

—॥ प्रेमगर्विता परकीया ॥—

पदलग्नं कण्टकमिदं म्रियमाणामवति स्म ।
प्रीतिमञ्जयन् भीतितः प्रियो यदपनयति स्म ॥ २२ ॥

पदे लग्नमिदं कण्टकम्, म्रियमाणां माम् रक्षितवत्। यदीदं पदे नालगिष्यत् तर्हि विरहविकलाहं अमरिष्यम्। यस्माद्धि प्रीतिं प्रकाशयन्, भीतितः भयपूर्वकं प्रियतमो यत् कण्टकं अपनीतवान्। कंटकोद्धारव्याजेन अङ्के नायिकापादग्रहणे नायकेन समारोपितः, सा च प्रियाङ्गसंस्पर्शमवाप्य विरहकष्टं विस्मारितवती। अत एव कण्टकं म्रियमाणां नायिकां जीवयामासेत्याशयः। अहो एतादृश्याः शिरीषकोमलाङ्ग्याः कण्टकव्यथा जाता इत्यादि प्रेमप्रकाशनम्। कण्टकोद्धारसमये—कण्टकाग्रं पदे न त्रुटेत्-निःसारणे च कोमलाङ्ग्यास्तस्या व्यथा न भवेदिति भयप्रकाशनम् ॥ २२ ॥

वदति निषिध्यति रज्यति, द्वेष्टि मिलति जिह्रेति ।
सदने बहुलजनेपि सा, नयनेनाऽऽलपतीव ॥ २३ ॥

नयनद्वारा किञ्चित्कथयति, किञ्चिन्निषिध्यति। प्रेमाणं प्रकाशयति। द्वेष्टि, रुष्टा भूत्वा प्रेमप्रतिघातं करोतीत्यर्थः। एवं जनसंकुलेऽपि भवने, युवत्या सा नयनद्वारा वार्तालापमिव करोति। इयं नायिकायाश्चेष्टा, एवमेव नायकोऽपि वदति निषिध्यति०। इति द्वावपि नयनेनालपतः, इति द्विवचनाभिप्रायो विहारिणः एकवचनेन प्रदर्शितः ॥ २३ ॥

---

'इहि काँटे मो पाय गडि लीनी मरति जिवाय ।
प्रीति जनावत भीतिसों मीतजु काढ्यो आय ॥ २२ ॥'
'कहत नटत रीझत खिझत मिलत खिलत लजियात ।
भरे भौनमें करत हैं नैननिहीं सब बात ॥ २३ ॥'

—⊰ नदीतटे नायिकया मेलनम् ⊱—

स्नात्वा सा परिधाय पटमनमत्तिलकमिषेण ।
प्रियमाज्ञाप्य गृहानगाचञ्चलदृक्प्रसरेण ॥ २४ ॥

यदा नायिका यमुनायां स्नाति स्म, तदैव रसिकवरः श्रीकृष्णस्तत्रागतः । क्रियाविदग्धा सापि स्नात्वा, वस्त्रं परिधाय, तिलकरचनस्य मिषेण, हस्तयोरुत्थापनद्वारा प्रियम् अनमत् । अथवा, यमुनातटे घट्टोपरि देवमूर्तीनामग्रतः तिलकसामग्रीमादर्शादिकं च नीत्वा बहवो देवलकास्तिष्ठन्ति । ते कृतस्नानेभ्यो जनेभ्यस्तिलकं ददति, तद्दत्तं ताम्रखण्डादिकं च गृह्णन्ति । तथा च नायिका पूर्वदेवलकसकाशात् अवनता भूत्वा तिलकग्रहणव्याजेन नायकं प्रणनामेति भावः । चञ्चलेन दृक्प्रसरेण (कटाक्षेण) सम्यक् प्रियमाज्ञाप्य अनुमतिं दत्त्वा, निजगृहानगमत् । इह सर्वजनसंकुले कालिन्दीकूले तु प्रणामं कुरु । इदानीं गृहमेव याहि, अहं तत्रैवागच्छामीति नायकमाज्ञापितवतीत्याशयः ॥ २४ ॥

—⊰ वाग्विदग्धा स्वयंदूतिका ⊱—

क्षणमात्रमपनय पथिक ! मिलदलिपुञ्जमवेहि ।
यमुनातीरतमालगतमालतिकुञ्जमुपेहि ॥ २५ ॥

पथिक ! मार्गचलनजनितश्रान्त ! क्षणमात्रम् आतपं निवारय । अपेहि अपनीहि, किं ते दिनकरमिति निवारय । किं तत्, तदाह—यमुनातीरे यत्तमालेऽस्मिन् गता (अर्थात् तमालवृक्षेण सहाश्लिष्टा या मालतीलता तस्याः कुञ्जम्, सौरभलाभात् मिलन्तः अलिपुञ्जा यस्मिंस्तादृशमिमं संकुञ्जमुपेहि

'न्हान पहिरि पट, डठि कियो बैंदी मिस परनाम ।
दृग चलाय घरकों चलीं विदा किये घनश्याम ॥ २४ ॥'
'छन पथिक निवारिये अलिन दलित अलिपुंज ।
यमुनातीर तमाल तर मिलित मालती कुंज ॥ २५ ॥'

मागच्छ । मातपक्रान्तस्थं यदि शीतलं सुगन्धं तमालमालतीभ्यामाच्छादितत्वात्प्रच्छन्नं स्थानं सांप्रतं गमिष्यति, तर्हि न कोऽप्यन्यथा ज्ञास्यति । अहमपि च तत्रायास्यामीति व्यङ्ग्यम् । किञ्च यथा तमालेन सह मालत्याश्लिष्टा एवमावयोरपि सङ्गो भवेदिति 'तमालगतमालती'पदेन स्वाभिप्रायो ध्वनितः । मूले छेक-वृत्त्यनुप्रास एव द्वितीयोत्तरार्द्धे—'तमाल' 'त–माल'ति कुञ्जेति यमकोऽपि ॥ २५ ॥

→※ नायिकानायकयोर्मिथो दर्शनम् ※←

अधिगृहमाबद्धामचलदृष्टिरज्जुमारुह्य ।
इतस्ततश्चेतो द्वयोरटति नट इवागृह्य ॥ २६ ॥

नायिकानायकौ स्वस्वसौधोपरि स्थितौ मिथः पश्यतस्तदाह—अधिगृहम् गृहे ( गृहोपरि ) आबद्धाम्—अचलाम् दृष्टिरूपां रज्जुमारुह्य, द्वयोरपि चेतः, अगृह्य आग्रहपुरस्सरं निर्भयमित्यर्थः । नट इव इतस्ततः अटति । नटो यथा निर्भयः सन् रज्जूपरि भ्रमति, एवं द्वयोरपि मानसं परस्परावद्धां दृष्टिमवलम्ब्य इतस्ततो गच्छति । न भयं करोति । इतस्तत इत्यस्याभिप्रायः—नायकस्य मनो नायिकापर्यन्तं गच्छति पुनर्लोकसंकोचात्परावर्तते, एवं नायिकाया अपि मनो नायकपर्यन्तं याति, पुनः संकोचात्परावृत्त्यायातीति नटसाम्याय ॥ २६ ॥

द्वयोरमिलतां लोचने न निरुद्धे वसनेन ।
सैन्यवृन्दमभिभूयते लघुनासीरबलेन ॥ २७ ॥

नायिकानायकयोर्द्वयोः लोचने ससम्भ्रमम् अमिलताम् परस्परमयुज्येताम् । घूंघटेन वसनेन न निरुद्धे अभूताम् । नायिकायाः मुखावगुण्ठनवसन-

---

'डीठि बरत बाँधी अटनि चढ़ि धावत न डरात ।
इत उत तैं चित दुहुँनके नट लौं आवत जात ॥ २६ ॥'
'जुरे दुहुनिके दृग झमकि रुके न झीने चीर ।
हलकी फौज हरौल ज्यौं परत गोलपर भीर ॥ २७ ॥'

मासीत्, अत एव सूक्ष्मपटं भित्वा नायिकाया नेत्रे, नायकनेत्राभ्यां सह वलितायुध्येताम्, इत्याशयः। दृष्टान्तमाह—लघुना स्वल्पशक्तिना नासीरबलेन अग्रसरसैन्येन (हेतुभूतेन), प्रधानं सैन्यवृन्दम् अभिभूयते आक्रम्यते ।- यदि अग्रे वर्तमानं रक्षकसैन्यं न्यूनं निर्बलं च भवेत्तर्हि, पृष्ठस्थितं प्रधानसैन्यं प्रतिपक्षेण पराभूयते । अत्रापि नायिकायाः अवगुण्ठनवस्त्ररूपं रक्षकसैन्यमतिसूक्ष्ममासीदत एव, पृष्ठस्थिते प्रधानसैन्यभूते लोचने युद्धसंरम्भः समापतित इत्याशयः । 'भित्वा पटमपि दृशोरलभत यद्मनुध्यानि' । इति परमानन्दः । चपूनसुरतानि, चद्दनापलोकनसुखानीति कपटिर्थे कृतेऽपि—परस्परं युद्धघटनावसरे सुखपदेन कथनं प्रकृतानुपयोगि । यदि सुखमेवासीत् तर्हि—पटद्वारा रक्षणस्य काऽप्यपयुक्तताभूत् ? ॥ २७ ॥

अभयमयति रणसुभट इव, कोपि न तद्वशाति ।
खले लक्षजनसंकुलेऽप्यक्षि लक्ष्यमुपयाति ॥ २८ ॥

रणशूर इव नेत्रं निर्भयं यथा स्यात्तथा, अपरि गच्छति । तत् (नेत्रम्) कोऽपि जनो न निरोद्धुं शक्नोति । लक्षजनसंकुलेऽपि स्थले, अक्षि (नेत्रम्) लक्ष्यं (यद् आत्मनो निरीक्षणीयं भवति, तत्) उपयाति प्राप्नोति । नायिकानायकयोर्द्वयोर्नेत्रयोः परस्परमेलनस्य संकेतेयम् । 'अक्षियुगं हरिणाक्षि तव गच्छति मधुपतिमेव' इति केवलं नायिकानेत्रमेव पश्यतो परमानन्दः ॥ २८ ॥

सलज्जेव सा शशिमुखी मुखमवगुण्ठ्य पटेन ।
दहनलतेव गता द्रुतं मामवेक्ष्य चकितेन ॥ २९ ॥

वास्तवे तस्य लज्जा (दर्शनलालसावशात्) नासीत्तथापि सलज्जा इव सा चन्द्रमुखी, पटेन मुखं छिद्रितसिचाय, चकितेन (सहसा, अतर्कितं

---

'पहुँचति डटि रन-सुभट लौं रोक सकैं सब नाहिं ।
लाखन हूँ की भीर मैं आँखि उहीं चलि जाहिं ॥ २८ ॥'
'सटपटी सी ससिमुखी मुख घूँघटपट ढाँकि ।
पावक लपटी झमकि कै गई झरोखौ झाँकि ॥ २९ ॥'

किञ्चिद्दाशोत्तेजकं वस्तु दृष्ट्वा च उद्भवति तेन भावेन) नामधेयम्, अम्बुज्वलत्वात् अग्नेर्ज्वाला इव द्रुत गता! उज्ज्वलत्वेऽपि, अभिज्वालायाः साम्यं नाविष्कायां ब्रजभाषानुरोधादेव। वास्तवे तु 'ज्वाला' पदं हृदयज्वालार्थेव। अत एव किञ्चित्सरसतामाकर्तुम् ज्वलन्तो वह्निलताकारा इव, दह्यमाना दहनज्वाला, दहनलता इति प्रायोक्ति। यदि महापण्डिता निरूपयेरन्, तर्हि 'अग्निरिवैव गता द्रुतम्' इति पठेयुः। मूले 'लटपटानि सी दाग्रिमुखी'-त्येतत्पदं 'लटपटातांसी (मानो व्याकुल)' इति व्याख्यातवान्महापण्डितः पद्मसिंहः। परमानन्दस्यानन्दस्तु भूमिकायां प्रदर्शित एव ॥ २९ ॥

—दयितानुरागिणी—

त्वमपि वदसि सखि, सुपठुतां स्वयमहमपि जानामि।
मोहनमेक्ष्य मनो वसेत्तदा मानमुपयामि ॥ ३० ॥

हे सखि! त्वमपि सुगतार्थं बहु वदसि। स्वयम् अहमपि 'दयितेन सार्कं सगौरवं कथं व्यवहर्तव्यम्' इत्यादि सुपठुतां जानामि। परं मोहनं मोहकारकं तं नायकम्-आ-ईक्ष्य, यदि मनो मदीयं वसेत्तदा मानं प्राप्नोमि, मानं कुर्यामित्यर्थः। नायकावलोकन एव नाहमात्मनः प्रभवामि, कथं मानं धारयेयमिति भावः ॥ ३० ॥

सततमीप्स्यमानोऽपि हृदि मानो न निपुणमेति।
यानानवगुण ईक्ष्यते, मनसि गुणः समुदेति ॥३१॥

हे सखि! मम हृदि मानस्य सदा इच्छा भवति। परं सततम् ईप्स्यमानः, इष्यमाणोऽपि मानः हृदि निपुणं यथा स्यात्तथा न एति। मानस्य साधनाभावात् सम्यक् मानो मम हृदि अवकाशं न लभते इत्यर्थः। यतो हि—

---

'तू हू कहति हौं आप हू समुझति सबै सयान।
लखि मोहन जौ मन रहै तौ मन राखौं मान ॥ ३० ॥'
'[illegible] हौंगे रहै मन न ठिकु ठहराय।
जे तौ अवगुन ढूँढ़िये गुनै हाथ परि जाय ॥ ३१ ॥'

मानकरणार्थं यावान् दोषः (नायकस्य) इष्यते अन्विष्यते, मनसि गुण एव आगच्छति । दोषान्वेषणार्थं यावन्नायकचरित्रं विचारयामि तावदेव तस्य प्रत्येकपातांसु गुणमेव पश्यामीत्याशयः ॥ परमानन्दस्तु–'मामस्त्वयि रजनीदिनं न हि निश्चलतामेति । प्रिये विचिन्वति तेऽगुणे तदस्ते गुण एति ॥' इति प्रहेलिकामाह । यदि सखा नायकं प्रत्युक्तिरपि स्यात्तर्हि 'तव अगुणे दुर्वाक्यादिके विचिन्वति सति' इति व्याख्यायां अन्वेषकं दुर्बोधमस्ति, उत नायिकादिश्चेतनपदार्थः । अगुणे इति सप्तम्याः स्थाने द्वितीयां कृत्वा यस्मिन् कस्मिन्नपि जने तव 'अगुणं विचिन्वति सति' इत्यर्थः क्रियते, तर्हि प्रिये इत्यस्य कथं संगतिः । सर्वो जनः 'प्रिय' इति व्यपदेशं कथं कुर्यात् । नायिकायाः प्रियः सर्वस्य प्रियो भवेदिति बलात्कारो नास्ति । यदि नायिका अन्वेषणस्य कर्त्री तदा 'विचिन्वति सति' इति पुंस्त्वं कथं घटेत ? 'प्रिये नायके, तव अगुणं विचिन्वति' इति द्वितीयपक्षार्थस्य व्याख्यापि न संगच्छते, मानस्यैच्छा नायकस्यास्ति उत नायिकायाः । यदि नायकदेव एव मानलीलां कर्तुमुत्सुकोऽस्ति, तर्हि विहारी भ्रान्तः, येन हि नायिकाया एव मानमुद्दिश्य पद्यमिदं प्रोक्तमित्यलम् ॥ ११ ॥

## —प्रेमगर्विता—

तिलकमकृत कम्पितकरः प्रियश्चिबुकमुत्थाप्य ।
कुटिलमटति साऽलिकतटे कुटिलतिलकमेवाप्य ॥ १२ ॥

सात्त्विकोद्भावात्कम्पितः करो यस्य ईदृशः प्रियः, नायिकायाश्चिबुकमुत्थाप्य, तिलकम् अकृत, अकार्षीत् । सा गर्विता नायिका, अलिके ललाटे कुटिलं वक्रं आत्मीयं तिलकमेव आ–आप्य गर्वेण वक्रं यथा स्यात्तथा अटति । परमानन्दस्य 'विहरति कुटिलकृतेव ।' इति 'कुटिलीकृत्य' इत्यर्थे अनावश्यकम् ॥ १२ ॥

---

'दियो जु चिबुक उठाय करि कंपित करि भरतार ।
टेढ़ी पै टेढ़ो फिरै टेढ़े तिलक लिलार ॥ १२ ॥'

### लक्षिता

गतिरपरा, द्युतिरपि परा मुखे, चोक्तिरपरैव ।
प्रियहृदयारूढां वदति रूढा भ्रुकुटिलतैव ॥ ३३ ॥

मुखे द्युतिरपि परा । पूर्वं या नासीत्सा । उक्तिरपि अपरैव । वचनान्यपि सर्वथ्यप्रकारान्यन्यान्येव वदसि । हे सखि ! त्वं अभिमानेन रूढा भ्रुकुटिलतैव, त्वाम्–एषु दिनेषु प्रियहृदये आरूढां वदति । नायिकां प्रति सख्या उक्तिः ॥ ३३ ॥

### खण्डिता

पक्ष्मसु वीटिरसोऽधरेऽञ्जनमलक्तमलिकेऽस्ति ।
रुचिररङ्गतः सङ्गतः सुस्वागतमिह तेऽस्ति ॥ ३४ ॥

नायिकान्तरनेत्रचुम्बनात्पक्ष्मसु ताम्बूलरसः, स्वरक्तनेत्रचुम्बनात् अधरे कज्जलम्, ललाटे अलक्तकम्, अस्ति । यद् अधररञ्जकं तन्नेत्रयोः, यन्नेत्ररञ्जकं तदधरे, यत्पादरञ्जकं तल्ललाटे, एवं विपर्ययस्थतया रुचिरेण रङ्गेण सह संगतो भवान् । तेऽद्य सुस्वागतम् अस्ति । रुचिरेति विपरीतलक्षणया नायकं प्रत्यारोपाय । स्वागतमपि साकूतम् ॥ ३४ ॥

### प्रोषितपतिका

करपरिमर्दितकुसुममिव विह्वलिता विरहेण ।
सततसमीपसखीभिरपि परिचीयेत चिरेण ॥ ३५ ॥

---

'औरै गति औरै बचन भयो बदन रँग और ।
दौसक तैं पिय चित चढ़ी कहै चढ़ी है त्यौर ॥ ३३ ॥'
'पलन पीक अंजन अधर, धरे महावर भाल ।
आजु मिले सु भली करी, भले बने हो लाल ॥ ३४ ॥'
'कर के मीड़े कुसुम लौं गई बिरह कुम्हिलाय ।
सदा समीपिनि सखिनि हूँ, नीठि पिछानी जाय ॥ ३५ ॥'

विरहिण्याः प्रतिवेशी जनः, शिशिरर्तौ हिमकर्पूरादिशीतलं वस्तु, वहन् उपयोगे नयन् सन्, समीपे वसन्त्याः तस्या विरहिण्याः तनुतापं (वह्नि-स्पर्शनद्वारा प्राप्यमाणं शरीरोत्तापम्) कथञ्चित् असह्यं सोढवान्। ग्रीष्म-दिवसानां (न रात्रीणामपि । तत्र कदाचित् दास्यमपि स्यात्) वासस्तु [अस्या विरहिण्याः प्रतिवेशो निवासस्तु] प्रतिवेशिनो जनस्य पक्षे पापसे-वाऽभूत् । इदानीं प्रतिवेशिनोऽपि तत्र वस्तुं न शक्नुवन्तीति विरहसंतापस्य पराकाष्ठा । नायकं प्रति सखीकृतं नायिकाविरहनिवेदनमिदम् । "हिमरजनी हिमजलकणैरुपवसतामपयाति । अधुना तपनदिनेषु तत्काठिन्यं प्रतिभाति ।" इति परमानन्दः । हिमजलकणद्वारा उपवसतां (उपवासं कुर्वताम्) कष्टावहा हिमरात्रिर्व्यतीता, तदा ग्रीष्मदिनेषु काठिन्यं सम्पन्नमेव । 'तत्काठिन्यम्', तस्य कस्य काठिन्यम्? अपोह एवार्थस्य । उपवासी 'प्रतिवेशी' इति तु निर-र्थमेव ॥ ३७ ॥

घनतरशीतनिशास्वपि च वसनमार्द्रमपिधाय ।
साहसेन संनिधिमयति सखीजनः स्नेहाय ॥ ३८ ॥

घनतरं शीतं यासु, एवंविधासु शीततुनिशास्वपि, ज्वालाया निवारणार्थम् अग्रे आर्द्रं वसनम् आच्छाद्य, स्नेहाय (स्नेहकारणात्) सखीजनः, साहसं कृत्वा तस्याः विरहिण्याः संनिधिं गच्छति । तस्याः शरीरात्तथा ज्वाला निःसरन्ति यथार्द्रवसनमग्रे कृत्वा अतिसाहसं कृत्वैव सख्यो गच्छन्ति, अन्यथा को वा गन्तुं पारयेदिति सख्या नायकं प्रत्युक्तिः । 'हिमतल्पामपि मधुपते! सगाहमग्रेहापि । तदुपस्थातुं न क्षमा सखी मज्जलवसनापि ॥' इति परमानन्दानुवादः क्लिष्टसुन्दर इति स्पष्टं सहृदयैरेव । 'तत् ग्राम उपरता-पुनिति' सट्टीका ॥ ३८ ॥

प्रवसन्नयत्प्रियतमः सर्वसुखानि सहैव ।
शिशिरनिशां नैदाघदिनमदधान्मां समर्प्य ॥ ३९ ॥

---

'आड़े दै आले बसन, जाड़े हू की राति ।
साहस कै कै नेह बस सखी सबै ढिग जाति ॥ ३८ ॥'
'चलत चलत लौं लै चले, सब सुख संग लगाय ।
ग्रीषम बासर शिशिर निशि, पिय मो पास बसाय ॥ ३९ ॥'

—※ सोरठा ※—

विरहे शुष्यति देह, इतः स्नेह उपचयमयति ।
वर्षति यदि मघवेह, यासो ह्रसतिः, यवाः स्थिराः ॥४१॥

विरहे देहः शुष्यति, परम् अपरतः स्नेहो वृद्धिम् याति । यदि इह (अगानि) मघवा मेघो वर्षति तर्हि यवासः ('जवासा') ह्रसति शुष्यति । यवाः स्थिराः पुष्टा भवन्ति ॥ ४१ ॥

दो०–विरहपावके प्लुष्यते, वहति विलोचनवारि ।
श्वासमरुति चोड्डीयते चित्तमहर्निशचारि ॥ ४२ ॥

अहर्निशं चरति चैतस्माद् भ्रमति इत्यस्मिन्नेकं मे हृदयम्, विरहाग्नौ पच्यते ज्वलति । विलोचनयोः वारि वारिणि जले । 'वार्' शब्दस्य सप्तमी । यद्वा, पचनात् प्रथमं नियतमन्यत्र नीयते । श्वासपवने च उड्डीयते । अहो अस्य हृदयस्योपरि कियन्तो निरन्तयः । अग्निना दह्यते । वारिणा प्रवाह्यते । मारुतेन चोड्डीयते । इत्यादयः । सर्वाः सम्भवः । 'दग्धं तद्विरहानलैः क्लिन्नं प्रीतिरसेन । शिवं पश्यसि हृदय किं धीरं भवनपथेन ॥' इति परमानन्दः 'उड्यो उसास समीर' इति तु मध्यममेवोड्डापयामास । टीकायाम्–''हृत्परिणं नायकनयनरूपं वारि किमिति वहसि' इति प्रश्नमुत्थाप्य पुनः 'दीप्तं वारि, विरहानलेन दग्धम्, प्रीतिरसेन जलेन क्लिन्नम् आर्द्रतर-मित्यादि विविधं वदति । जलमध्यनार्द्रं भवति किम् । यस्य आर्द्रतरता अत्र निर्दिश्यते ॥ ४२ ॥

---

१ यवा यवाः ॥ पाठान्तरम् ।

'बिरह सुखाई देह, नेह कियो अतिडहडहो ।
जैसे बरसे मेह, जरै जवासो जौ जमै ॥ ४१ ॥'
'पजरयो आगि बिरहकी, बह्यो बिलोचन नीर ।
आठौं जाम हियो रहै, उड्यो उसास समीर ॥ ४२ ॥'

चेदवलोकितुमभिलषसि देहदशामस्या हि ।
तर्हि निभृतनीरवमिमामवलोक्य ननु याहि ॥ ४३ ॥

इति नायकं प्रति—अस्या विरहिण्याः देहदशां स्वयं स्वनेत्राभ्यामवलोकितुं वाञ्छसि । अस्मद्वचने तवाविश्वासो नास्ति । तर्हि निभृतं गुप्तम्, नीरवं निःशब्दं यथा स्यात्तथा, (येन सा न विजानीयात्) याहि, तां च अवलोकय । तवागमनस्य हर्षेण तस्या दशा परिवर्तेत, परं गुप्तं यदि तां द्रक्ष्यसि, तदा मया यादृशी तस्या दशा वर्णिता सा ते प्रत्यक्षं भविष्यतीत्याशयः ॥ ४३ ॥

कति वारान्न जगाद सा खद्योतानभिदृश्य ।
अङ्गारा वर्षन्ति सखि ! तिष्ठ गृहानधिविश्य ॥ ४४ ॥

विरहतापेन व्याकुला सा खद्योतान् अभिलक्ष्य दृष्ट्वा—"हे सखि ! अद्य अङ्गारा वर्षन्ति । एहि, गृहान् प्रविश्य, तिष्ठ" इति कतिवारान् न जगाद । अपि तु बहून् वारान् कथयामास । विरहवह्निखण्डितायाः यमकुर्वन्तु खद्योतेष्वपि अङ्गारवृष्टिरेवाभूदित्याशयः । नायकं प्रति नायिकाया दशां सखी वक्ति । कतिवारं न जगाद सा दृष्ट्वा खद्योतानि । वर्षन्ति अनलगोलकमिति प्रविश प्रविश सद्मानि ॥' इति परमानन्दस्तु खद्योतानलयोरुभयोरपि श्लेषतामादिदेश । सखीं प्रति नायिकाया उक्तिरिति द्वितीयमपि योजयामास ॥ ४४ ॥

→※ प्रेमगर्विता ※←

क्षणमनक्ति स्पृशति क्षणं क्षणमावृणुते रोति ।
मुकुरे प्रियखण्डितमधरमीक्षन्त्या दिनमेति ॥ ४५ ॥

---

'जो वाके तनकी दसा देख्यौ चाहत आप ।
तौ बलि नेक बिलोकिये चलि अचकाँ चुपचाप ॥ ४३ ॥'
'बिरह जरी लखि जींगननु कह्यौ न उहि कै बार ।
अरी आउ भजि भीतरैं, बरसत आज अँगार ॥ ४४ ॥'
'छिनकु उघारति छिन छुवति राखति छिनकु छिपाइ ।
सबदिन पियखंडित अधर दरपन देखत जाइ ॥ ४५ ॥'

क्षणं, प्रियदन्तखण्डितम् अधरम् अनक्ति उद्घाट्य प्रकाशयति । क्षणं तं घुपति स्पृशति । क्षणं सा तमधरम् आवृणुते आच्छादयति । इति मुकुरे प्रियदृष्टमधरं वीक्षमाणायाः सर्वं दिनं व्यत्येति । सखीं प्रति सखी नायिकाया लीलां वक्ति । अनुदात्तेत्त्वलक्षणमात्मनेपदं क्षणमनित्यं स्वीकुर्वन्तु वैयाकरणाः, येन ईक्षन्त्या इति स्यात् । यदि सर्वथैव षष्ठीभावस्तर्हि 'अव-पश्यतः (आनन्त्याः, पश्यन्त्या इति भावः) दिनमेति ।' इति योजयितव्यम् । परमानन्दस्तु—'क्षणं क्षणं प्रियखण्डितं स्पृशति पिधत्ते करेण । दर्शयति कदाचिदस्याधरं स्वं पश्यति मुकुरेण ।' इति क्षणपदं प्रत्येकमसंबध्यापि छन्दोऽनुरोधात् स्थाने स्थाने चकार ॥ ४५ ॥

—क्रियाविदग्धा—

न समलपज्जनमध्यगा पुरतः प्रियमधिगम्य ।
उरसि शिरसि सस्मितमसावधरत्करमवनम्य ॥ ४६ ॥

जनस्य बहिरङ्गलोकस्य मध्यगता, असौ नायिका पुरतः संमुखे प्रियं प्राप्य, संलापं न अकरोत् । सस्मितमवनम्य (प्रणम्य) उरसि शिरसि च करं धृतवती । कृष्णवर्णे केशपाशे हस्तविन्यासाद्रात्रौ आवयोः समागमः, उरसि, कुचयोः संमुखा साम्याधरस्पर्शेन तच्छपथपूर्वकं सत्वरं सूचितेत्यादि सहृदयोऽर्थः परिशेषः ॥ ४६ ॥

—अतिरसाविष्टा—

क्षणं चलैस्तिष्ठेत्क्षणं बाह्ये प्रियमासाद्य ।
हर्म्यतटात् पश्यति घटामबला तडिच्छटाऽद्य ॥ ४७ ॥

---

'दरपि न बोली सखि लखन निरखि सनित संगसाय ।
अँखियन होंसे हँसि धरसो सीस हिये पर हाथ ॥ ४६ ॥'
'छिनक चली छिनकी छिनक भुजनीठम गल डारि ।
अरी अटा देखति घटा बिजुछटा सी नारि ॥ ४७ ॥'

शशिनं पश्यामि । इमाः (चतुर्थीव्रते चन्द्रायार्घ्यं दित्सन्त्यः) सखिगणाः, समयं विनैव विधुम् अदृष्ट्वैव अर्घ्यं दधुः । यदि चन्द्रोदयो जातो न वेति ते ज्ञातुमिच्छा, तर्हि अहमेव तं दर्शयामि । तव मुखं दृष्ट्वा सर्वासां चन्द्रभ्रमो भवेदित्याशयः ॥ ४९ ॥

राजति नीलपटान्तरितमेतन्मुखमवधेहि ।
कलितकलानिधिरुल्लसति कालिन्दी सलिले हि ॥५०॥

अवधेहि अवहितो भव । सावधानं पश्येत्यर्थः । सूक्ष्मेण नीलपटेन अन्तरितम्—अर्थात् दृश्यमानमपि नीलवसनेन (सूक्ष्मेण) किञ्चित्सव्यवधानम् इदं नायिकायाः मुखम्, राजति । तत्र गम्योत्प्रेक्षामाह—कालिन्दी (यमुना) सलिले पूर्णः कलानिधिः शोभते । श्यामे यमुनाजले यथा चन्द्रः शोभते, तथा सूक्ष्मेण नीलपटेनान्तरितमिदं मुखं शोभत इत्याशयः । 'मुखं नीलवसनावृतं लसति प्रिये तवैव । तत्तु कलिन्दकन्याजले धन्या चन्द्रकलेव ॥' इति परमानन्दः । नीलवसनेनावृतमित्यपार्थकं विहारिवाञ्छितार्थस्य । मुखेन साकं चन्द्रकलाया उपमा, परमानन्दादेव भूला । पूर्णाकारस्य, पूर्णचन्द्रेण साकं तुलना स्यान्न कलया । तथैव कलेवेत्येवकारस्याप्यनावश्यकता । आरम्भे एव 'तत्तु' पदमपि शोभां शिथिलीकरोति ॥ ५० ॥

सूक्ष्मपटे चञ्चलनयनयुगं कान्तिमुपयाति ।
मन्ये सुरसरिताजले मीनमिथुनमाभाति ॥ ५१ ॥

कान्तिमुपयाति प्रकाशते । सुरसरितायाः गङ्गायाः । भागुरेराप् । मीनयोर्मिथुनं युग्मम् । उच्छलनेनाभाति 'उच्छलदमरसरिज्जले मीनद्वयमिव भाति' इत्यादि परमानन्दः । सुरसरित्पदं लोपितम् । उच्छलन्मीनद्वयं

---

'छिप्यो छबीलो मुंह लसै, नीले आँचर चीर ।
मनौं कलानिधि झलमलै कालिन्दी के नीर ॥ ५० ॥
'चख चमात चंचल नयन, बिच घुंघट पट झीन ।
मानो सुरसरिता विमल जल उछलत जुगमीन ॥ ५१ ॥

'नयनकमलमिति यन्मुधा नयनोपलमिदमेव । अनयोरपि योगे विरहदहनं जयति यदेव ॥' इति परमानन्दः । विधेयं किम्-अस्य स्पष्टोऽत्र अविमर्शः । ठिङ्गानेपि परमानन्दः, परमानन्द एव । अत्रोपलदहनयोरुपरि हीयता-कृपा प्रदर्शिता एषकारोपि चमत्कारं सूचयति ॥ ५३ ॥

विषमशीलहग्भ्यामहो कां गतिमयमारोपि ।
क्वचिद्वेणुमाले क्वचित्पटः क्वचिन्मुकुटोपि ॥ ५४ ॥

नेत्रयोः कृते सखी, नायिकामुपालभते—विषमशीलाभ्याम् (पुरुषारा अपरलोकं विकलीकुर्वन्त्याम्) ते दृग्भ्यां अयं श्रीकृष्णः कां दशाम् आरोपि (प्रापितः)। यत् वेणु-माला-पट-मुकुटादयः क्वचिदपि विप्रस्ताः सन्तीति स न जानाति । अनिविकत्वः स आत्मने ॥ प्रभवतीति भावः । 'कटैते' पदस्य पुष्पवीटे इत्यर्थं स्वीकृत्वायमर्थः । 'लाट'युक्ते (लालिते) इत्यर्थोपि कैश्चित्स्वीकृतः । परमानन्दस्तु 'भुवि शेते संसितवसनमुकुटलकुटकलयैव' पक्षस्य स्थाने संसितप्रयोगो निरर्थकः । विहारी कथयति- 'कहुं मुरली कहुं पीतपट' अर्थात् ते स्वस्थानात्पतिताः सन्ति अयं तु व्याख्याति 'शिथि-लीभूता पतनादीनां कला, तथा' । माला परमानन्दमहाशयेन मुक्ताविता ! अथ च केयं कला ? ॥ ५४ ॥

मुखनिर्गतवचनान्यमून्यनृतायन्त इतीव ।
संलापाय विलोचने रचयति विधिरकृतीव ॥ ५५ ॥

संकेतस्थले आगमनादिविषये, प्रेमिणां वचनानि प्रायो मिथ्या भवन्ति । अत एव वचनानि लोकेषु अविश्वसनीयानि संजातानि । विधात्रा वचनानि मनोभावसूचनाय, विश्वासाय च रचितान्यासन् । एवं स्थितौ अकृतार्थे इव विधिर्लोचने विरचयामास । तया च चतुराणां लोचनान्येव वचनानां कार्यं साधयन्ति । एवं च नायिकादेः परमदाक्षिण्यं व्यज्यते । एष एव भावोऽस्मिन् पद्ये । अमूनि वचनानि अनृतानि भवन्ति एतदर्थमेव अकृतार्थे इव विधिः संलापाय लोचने रचयामास । परमानन्दोक्तिस्तत्रत्या भूमिकायां द्रष्टव्या ॥ ५५ ॥

मृगनयने ! मृगयाविधिं मदनो मञ्जुमुवाच ।
वनचरनयनमृगाविमौ नागरनरमृगया च ॥ ५६ ॥

वनविहारं कुर्वतीं नायिकां प्रति सख्याः परिहासोक्तिः—हे मृगनयने ! मदनो (मृगयाशिक्षकः) तुभ्यं मृगयाप्रकारं विलक्षणं प्रोवाच (लक्षणया उपदिदेश)—यत् इमौ वनचरौ नयनमृगौ स्तः, अनयोः कर्तव्या च नागरनराणां मृगया । अन्यत्र मृगयायां नगरनिवासिनो जना वनचराणां मृगाणां मृगयां कुर्वन्ति । अत्र तु वनचरौ इमौ (नयन) मृगावेव नागराणां नराणां मृगयां कुरुतः । यं नरं त्वं नेत्राभ्यां पश्यसि स एव कामविद्धो भवतीत्याशयः । मूले तु 'काननचारी नैन मृग' इत्यस्य 'कर्णपर्यन्तविश्रान्ते नयने' इत्यप्यर्थः संकेतेन भवति, न सोऽत्र साध्यः । 'अद्भुत इति मृगलोचने मृगयाविधिस्त्वैव । यल्लोचनमृगहस्तचतुरनरहिंसनमधुनैव ॥' इति परमानन्दः । वनचर-नगरनिवासिनृणोः पारस्परिकवैपरीत्यसूचको भावोऽत्रास्ते गतः । हिंसनपदमपि माधुर्यं हिंसनयुद्धोपपत्ति । अधुनैव हिंसनम् ? यद्यपि हिंसनं भवेत्तर्हि वैदिकी हिंसा हिंसा न भवति' इतिवत् सह्यमपि भवेत् ! अधुनैव !! कविवर्णनप्रकरणे पारस्तु नास्ति !!! ॥ ५६ ॥

---

'खेलन सिखये अलि भलै चतुर अहेरी मार ।
काननचारी नैन मृग नागर नरन सिकार ॥ ५६ ॥'

—※ भ्रूः ※—

कुञ्चितनासिकमुद्भ्रमितनयनं शपथमियाय ।
कण्टक इव हृदि पीडयति कुटिला भ्रूः सुचिराय ॥५७॥

कुञ्चिता नासिका यस्मिन् कर्मणि तथा, उद्भ्रमिते (नर्तिते) नयने यस्मिन् तथा सा । अनभिमते विषये शपथं इयाय (चकार) । शपथसमये कुटिलीकृता भ्रुकुटिः, कण्टक इव हृदि विद्धा चिराय मां पीडयति । न तां भ्रुकुटिं विस्मर्तुं प्रभवामीत्याशयः । 'किञ्चित्कुञ्चितनासिकं नर्तितदृशं तथापि । कण्टकमिव तद्भ्रुकुटं विध्यति मामद्यापि ॥' परमानन्दः । प्रकृतविषयस्य मूलोच्छेद एव । क्रिया लुप्ता, क्रियाविशेषणे योज्यः । 'तथापि' कण्टकस्य ह्रीयत्वं विशेषतो विध्यति ॥ ५७ ॥

※ केशाः ※

सहजमसृणशुचिमेचकं कचकुलमेत्य सुगन्धि ।
गणयति मार्गममार्गमपि मनो न रत्यनुबन्धि ॥ ५८ ॥

स्वभावतस्निग्धम्, स्वच्छम्, श्यामकान्ति, सुरभितम् कचकुलम्, आ–ईत्य, रत्यनुबन्धि प्रीतिपरवशं मनः, मार्गममार्गमपि न गणयति, बलवदुदीर्णमित्याशयः । 'सुरभितस्निग्धश्याममृदुविशदकचनिवहेषु । कापथेषु गत्वा मनो मुह्यति मुहुरपि तेषु ॥' परमानन्दः । 'कापथमुदयेषु केशेषु'ति व्याख्या । 'गनत न मन पथ अपथ, लखि बिथुरे सुधरे बार' इति बिहारी केशानपद्मा मनः कापथं न गणयतीत्याह । परमानन्दः केशानेव कापथांश्चकार । 'किं च विपणं मगुणं विपथम्' इत्येव कोषे श्रुतम् ।

---

'नाक, मोरि, नचाय दृग करी कका की सौंह ।
काँटेसी कसकत हिये, गड़ी कटीली भौंह ॥ ५७ ॥'

'सहजसचिक्कनस्यामरुचि सुचि सुगन्धसुकुमार ।
गनत न मन पथ अपथ लखि बिथुरे सुधरे बार ॥ ५८ ॥

'सविधर्यं' तु भाषापि श्रुतम् । न कोपि समुन्दरमित्याह । सनामयामात्र-दंडितास्तु 'विदग्धे' सविधर्णं वदन्ति । आमूलचूडं सप्तशत्यनुवादं दृष्ट्वा मया तु ज्ञातं परमानन्दमहाशयस्य संस्कृतभाषायां परिमित एवाधिकार आसीत् । अस्तु तत्पर्यो विचक्षणैः 'सरस' विशेषणं कुत्र भागतम्? अपि सरलताप्यायदर्शी? ॥ ५८ ॥

## —॥ भालबिन्दुः ॥—

अङ्को दशगुणितो भवति बिन्दोर्निकटे याति ।
तदलिकमिह बिन्दौ धृते बहुगुणितं प्रतिभाति ॥५९॥

बिन्दौ निकटे याति (बिन्दौ धृते सति) अङ्क—रूपादिरङ्को दशगुणितो भवति । परं तस्या नायिकायाः अलिकं बिन्दौ (भालतिलके) धृते सति बहुगुणितं भवति न दशगुणमेव । यद्वा यस्तु बहुः गुणः (सौन्दर्यगुणः) यस्य तादृशं शोभते । गुणपदे श्लेषः । मूले—"कहत सबै बेंदी दिये आँकु दसगुनो होत । तिय लिलार बेंदी दियें अगनित बढ़त उदोत ॥" यथा बिन्दुः दशगुणो भवतीत्युच्यते, तथा 'लिलार' पदेऽपि श्लेषेण समावेशः कर्तव्य आसीत् । 'आँकु दस गुनो होत—अगनित बढ़त उदोत' अत्र 'आँक' 'उदोत' योर्न साम्यं संघटितम् । संस्कृते तु श्लेषेण तत्समाधानम् । 'लोकेऽङ्को एकबिन्दुः किल दशगुणताकुरुयाति ।' इति परमानन्दस्य छन्दोऽभ्यासो-गुरुः सपाद, किमपरं ॥ ५९ ॥

## —॥ चिबुकम् ॥—

खिन्ना कुचगिरिरोहणान्मुखमनुदृष्टिरियाय ।
पुनरग्रे चलिता न सा, चिबुकगता तु निराय ॥ ६० ॥

---

'कहत सबै बेंदी दिये आँकु दसगुनो होत ।
तिय लिलार बेंदी दियें अगनित बढ़त उदोत ॥ ५९ ॥'
'कुच गिरि चढ़ि, अति थकित ह्वै, चली डीठि मुख चाड़ ।
फिरि न टरी, परियै रही, गिरी चिबुक की गाड़ ॥ ६० ॥'

उभयोः कुचपर्वतयोरारोहणात् खिन्ना (कामाग्निकटिता श्रान्ता च) (मे) दृष्टिः, सुरसलोभालोभात् सुखम् अनु इयाय जगाम। परमेषे न चलिता, भारम एव चिबुकस्य रन्ध्र एव चिराय पतिता। श्रान्तोऽपि न चलति, एव मे दृष्टिश्चिबुकसौन्दर्यमुग्धा तत्रैव पीडितामूदित्याशय ॥ ६० ॥

## कुचौ

कुचयुगमधिकञ्चुकि सिते वसने संव्रियते न ।
सुकविगिरामर्थोपमं प्रकटमीयतेऽनेन ॥ ६१ ॥

अधिकञ्चुकि कञ्चुक्या मध्ये, सिते वसने श्वेतायां शाट्याम्, तस्याः कुच युगं न तिरोधीयते । सुकविवाणीनां यथा अर्थस्तथा, अनेन (कञ्चुकेन) (तत्) प्रकटम्, ईयते प्रतीयते । उपरि श्वेता सूक्ष्मशाटी परिहिता, अन्तः कञ्चुलिका धारिता तथापि कुचौ दृश्येते एव । यथा सुकवीनां वर्णाः, आच्छादितो गुप्ताः अपि किञ्चिदवधाने एव स्पष्टाः भवन्ति तथैवेत्याशय । अनेन प्रकारयोरपि किञ्चिद् गुप्तयोरेव कुचयोः शोभेति ध्वनितम् । यथा कश्चित्—''कवि अच्छर तियके सु कुच अध उघरे सुखदेत ॥' (अर्धौ गिराम पिहित पिहितश्च कश्चित्सौभाग्यमेति मरहट्टवधूकुचाभ) 'अत्रापि—'सरल-वितृष्णवर्गार्थमिव चपलमुल्लसायेव ।' इति अर्थस्य हीयतां चकार परमानन्द ॥ ६१ ॥

## कटिः

लसति वपुषि नवयौवनं ह्रसति वलग्नमनेन ।
वशयति नयनमिदं यदा नमति मन्दगमनेन ॥ ६२ ॥

---

'दुरत न कुच, बिच कञ्चुकी चुपरी, सारी सेत ।
कवि आँखनके अर्थ लौं प्रगट दिखाई देत ॥ ६१ ॥'
'छटछटाति तन तरुनई रुचि लग लौं रुपि जाय ।
लगै छोट लोयननको लोयन देत लगाय ॥ ६२ ॥'

अनेन (नवयौवनेन) अवलग्नम् कटिः (भागुरेरकारलोपः), हसति। इदम् अवलग्नम् मन्देनापि चलनेन यदा नमति, कृशतावशात्कम्पते इ-त्यर्थः। तदा पेशपटेरिव शोभां प्राप्य, पश्यतो जनस्य नेत्रं चलयति। (हरिप्रकाशटीकामतेन)। रत्नाकरास्तु अन्यविषयमपि शिष्टप्रायमाति-भांवयन्ति। मूले 'छ'स्य वृत्त्यनुप्रासः। इह चतुर्ष्वपि चरणेषु 'लसति हस-ति' इत्यादि अनुप्रास इति शब्दालङ्कारस्य न न्यूनतेति बोध्यम्॥ ६२॥

—❀ रूपवर्णनम् ❀—

यत्नशते विहितेऽप्यहो, साहसशते कृतेऽलि।
वपुषि रूपरत्नाकरे दृङ् नहि पारमुपैति॥ ६३॥

नायिकारूपलुब्धस्य नायकस्योक्तिः, (नायिकोक्तिरपि संभवति)। तस्या रूपमालोक्य, कदाचिन्मनः लावण्यप्रापणं एव भ्रान्त्या विपदं गच्छति, कदाचिच्च आलस्यकम्पादिसात्त्विकविपदं मार्गे प्रसरति। एवं दर्शनमनिबन्धे सत्यपि यत्नशते कृते, साहसशते अलम् निर्मितेऽपि। रूपसागरे तस्याः शरीरे मे दृक् (दृष्टिः) पारं न उपैति रूपं विलोकयन्ती दृष्टिं तृप्यतीति भा-वः)। वाक्यप्रसमासार्थकम्। (हरिप्रकाशः)। रत्नाकरस्तु—पूर्वानुरा-गिण्या नायिकाया उक्तिः सखीं प्रति—लोकापवादाद्गुरुजनाद्भयात् यत्ने कृतेऽपि, निरोधितलोकानां दृष्टेर्भये सत्यपि, साहसे कृते लावण्यमये (समुद्रः, शरीर-मोमयमपि लावण्यमयम्) तनु—सागरे दृष्टिः पारं न प्राप्नोतीत्यर्थमाह॥६३॥

दृशमुपैति कनकं न वपुराप्य कनकसमकान्ति।
भूषणानि करकर्कशस्पर्शतया प्रतिभान्ति॥ ६४॥

---

'लौने हूँ साहस सहस, कीने जतन हजार।
लोयन लोयन-सिन्धु तन पैरि न पावत पार॥ ६३॥'
'ढीठि न परत समानदुति कनक, कनकसे गात।
भूषन करकरकस लगत परसि पिछाने जात॥ ६४॥'

कनकसमा सुवर्णसदृशी कान्तिर्यस्य ईदृशं तस्याः वपुः, आ-आप्य। कनकं सुवर्णं दृशं नोपैति। न दृश्यते इत्यर्थः। करयोः कर्कशः स्पर्शो येषां तत्तया भूषणानि प्रतिभान्ति प्रतीयन्ते। कनकसदृशे तस्याः शरीरे सुवर्ण-भूषणानि वर्णतो न प्रतीयन्ते। किन्तु स्पर्शे कृते, यदा करयोः कर्कशता प्रतीयते तदा भूषणानि प्रत्यभिज्ञायन्त इत्याशयः। "किमङ्गानि किं कनकम-यभूषणानि विलसन्ति। इति तदङ्गसङ्गं विना सहचरिजना न वन्ति।" इति परमानन्दः। 'हे सहचरिजनाः तस्याः अङ्गसङ्गं विना केपि जनाः एतत्र जानन्ति यद् भूषणानि उत अङ्गानि' इत्यादि, तट्टीका। अत्र बहुवचनमनौ-चित्यमाकर्षति। किं सर्वेषामेव अङ्गसङ्गस्याधिकारः? हन्त धिक्! भूषणानि कर्कशानीति प्रत्यभिज्ञायन्ते इत्यर्थलाभः कथम्? आलिङ्गने कृते भूषणानि धारितानीत्येव बोधः, तानि कर्कशानीति तु शब्दतो न प्रतीयन्ते ॥ ६४ ॥

किं कुसुमं का कौमुदी, कियती मुकुरविभाऽपि ।
यस्या उज्ज्वलतावशाद् दृग्भ्यामुज्ज्वलताऽऽपि ॥ ६५ ॥

यस्या नायिकायाः उज्ज्वलतावर्णनात् (गौरतावैभवात्) दर्शकानां नेत्राभ्यामपि उज्ज्वलता (विलक्षणज्योतिःसंपन्नता) आपि प्रापि। आप् धातोः कर्मणि लुङ्। तस्याः समीपे कुसुमादीनि कानि। तस्या उज्ज्वलतां विलोक्य कुसुम–कौमुदी–मुकुरादयो मलिना इव प्रतीयन्त इत्याशयः। अस्यानुवादेपि परमानन्दः पपात। 'यद्विलोक्य विमलानि सन्तु'। यत् किम्? यत्पदेन 'याम्' इत्यर्थस्तु न संभवेत्। उज्ज्वलतार्थे विमलमपि नार्थसमर्पकम्। विमलपदं मलराहित्यमेवाह, न गौरतामपि। 'जाकी उजराई लखैं आँखि ऊजरी होति।' इति 'उजराई ऊजरी'ति विहारिनिहितः शब्दालङ्कारोपि नात्र निरस्यते ॥ ६५ ॥

---

'कहा कुसुम कह कौमुदी, कितिक आरसी जोति।
जाकी उजराई लखै आँखि ऊजरी होति ॥ ६५ ॥'

### महानसे विलसन्त्या रूपशोभा

रुचिरा मुखरुचिरालसति विशदा शाटी भाति ।
महाकान्तिराभावहा महानसे प्रतिभाति ॥ ६६ ॥

विशदा, क्षालनधौततया स्वच्छा शाटी शोभते, तदन्तः रुचिरा, अतिदीप्तिशालिनी मुखरुचिः मुखशोभा, आलसति । अत एव—आभावहा पर्यन्ततः प्रकाशं प्रसारयन्ती, काचिदनिर्वचनीया अतिशोभा, महानसे पाकशालायां प्रतिभाति । नायिकाया मुखदीप्त्या सर्वमपि महानसं द्योतत इत्याशयः । 'टटकी' 'घटकी' ति मूले शब्दाडम्बरस्येह 'रुचिरा रुचिरा' इति । 'बगर जगर मगर' स्थानेपि—'महा-वहा-महा-' इत्यनुप्रास इति प्रेक्ष्यतां सहृदयैः । परमानन्दस्तु 'सूपविदलीकरणस्य' स्वप्नमत्र ददर्शेति पूर्वमुक्तम् ॥ ६६ ॥

### नवोढाया मधुपानम्

समधिकलज्जा नववधूर्मधु निपेय्य मदमेति ।
तथा तथा प्रियतामयति यथा यथोन्मदमेति ॥ ६७ ॥

अनिच्छावती अपि नववधूर्मधु पीत्वा मत्ततां याति । यथा यथा च उन्मदं गच्छति । अर्थात् उन्मत्ततया यथा यथा अविनयमाचरति, तथा तथा प्रियतमस्य अधिकाधिकं प्रियतां याति । परमानन्दस्तु—'मधुरसपीतमत्ता सा मधु पपौ यथैव । लज्जापि लज्जां विना विहसति तथा तथैव ॥' इति सर्वतः प्रथमं 'लज्जां विना' इति श्रवणेऽनुचितमेव भाति । तथा तथैवेत्यनेन सह यथैवेत्यस्य न योगः । तथा तथेत्यत्र तु क्रमः प्रतीयते, यथेत्यत्र न । बिहारी तु "त्यौं त्यौं अति मीठी लगति ज्यौं ज्यौं ढीठ्यौ देइ ।" इति वदन् मधुनिषेवणकृततया—एतदया प्रियोऽस्याः प्रीयत इति म-

---

'टटकी धोई धोवती, चटकीली मुखजोति ।
लसति रसोई के बगर जगर मगर दुति होति ॥ ६६ ॥'
'निपट लजीली नवल तिय बहकि बारुनी सेइ ।
त्यौं त्यौं अति मीठी लगति ज्यौं ज्यौं ढीठ्यौ देइ ॥ ६७ ॥'

धुरमाह। परमानन्दस्तु–लज्जां परित्यज्य हसतीत्येवाह। लज्जारहितायोत्तरं हसनेन माधुर्यमुतानौचित्यम्? मधुपसपीजनेत्यप्यमधुरम्। अस्तु सहृदयाः स्वतः परिचेष्यन्ति माधुर्यं कटुत्वं वा। मद, उन्मद इत्यन्त्यानुप्रासः (तुकान्त)। 'मेति मेति' इति यामकं 'तुकान्त'मेव ॥ ६७ ॥

→ अवलोकनम् ←

कलयति वेणीं सुनयना कलितमञ्जना, पश्य।
अङ्गुलिकुन्तलमध्यतः पश्यति हरिमुद्दिश्य ॥ ६८ ॥

कृताञ्जना एषा सुनयना, परस्परं संलग्नान् केशान्विमोच्य वेणीं रचयति। अङ्गुलीनां कुन्तलानां च मध्यतः हरिमुद्दिश्य पश्यति इति त्वं पश्य। सखीं प्रति सख्या उक्तिः ॥ ६८ ॥

निशितविशालविलोचनाः कति न हि ललनाः सन्ति।
अन्यास्तास्तव दृष्टयो याः सुधियो वशयन्ति ॥ ६९ ॥

निशिते तीक्ष्णे विशाले च लोचने यासां ताः, कति स्त्रियो न सन्ति। यथा तव तीक्ष्णे विशाले च लोचने एवं बहूनां रमणीनां नेत्रे स्तः। किन्तु तव या दृष्टयः निर्विदनिर्वचनीया एव याभिर्दृष्टिभिः प्रवीणा अपि वशे भवन्तीत्याशयः। त्वयाऽनुपमेन विलोकनेन स प्रवीणोऽपि नायको वशीकृत इति सखी नायिकां स्तौति ॥ ६९ ॥

गुरुजनपरिजनपरिवृता स्मिता मुखं परिवर्त्य।
तदपि ससिता पतति दृक् सहजसलज्जाऽऽदृत्य ॥७०॥

---

'खंजननि अंजन किये बैठी ब्यौरति बार।
कच अंगुरिन बिच दीठिदै निरखत नन्दकुमार ॥ ६८ ॥'
'अनियारे दीरघ दृगनि किती न तरुनि समान।
वह चितवन औरे कछु, जिहिं बस होत सुजान ॥ ६९ ॥'
'गयो कुटुम की भीरमें रही बैठि दै पीठि।
तऊ पलक पर जात इत सलज हँसौंही दीठि ॥ ७० ॥'

सा गुरुजनपरिजनादिकुटुम्बमध्ये मां प्रति मुखं परावर्त्य स्थिता। तदपि सस्मिता, स्वभावतः सलज्जा, तस्याः दृष्टिः, भालस्य ( मां प्रति भा- स्वरं प्रसृत्य ) इव मां प्रति, पतति। यद्यपि कुटुम्बमध्ये स्थिता, पृष्ठं दत्त्वा चापि स्थिता, तदपि मम प्रेमानुबन्धात्तस्याः दृष्टिः क्षणं मदुपरि पतत्येवेति नायकः स्वमनसि नायिकाप्रेमाणं विचारयति। 'सदसि कुटुम्बजनस्य सा तिष्ठति पृष्ठदत्तैव। क्वापि क्षणमपि सस्मितं पश्यति मामुदितेव॥' इति परमानन्दः। 'पृष्ठं दत्त्वा' इत्यर्थे पृष्ठदत्ता इत्यनेन कोऽर्थः? 'क्वापि' पश्यति तर्हि नायकस्य को लाभः? 'क्वापि समये' इति तु 'क्वापि' मात्रेण क्वापि न प्रतीतं भवति। 'सदसी' त्यप्यनावश्यकम्। यदि सभा वर्तते नायकस्यापि तत्राधिकारोऽस्त्येव, पुनः 'सभामध्ये स्थिता तदपि पश्यती'त्यत्र को वा विशेषः? ॥ ७० ॥

सङ्गो दृशि भङ्गो जने रतिरनुषङ्गमुपैति।
ग्रन्थिर्दुर्जनहृदि पतति चित्रमिदं समुदेति ॥ ७१ ॥

दृशि दृष्टौ सङ्गः। अर्थात् नायिकानायकयोर्नेत्रे परस्परं ग्रथिते भवतः ( ओलझते हैं' )। नेत्रे ग्रथिते भवतः, परं जने कुटुम्बजने, भङ्गो विच्छेदः उपैति। कुटुम्बजनैः सार्धं प्रीतिसम्बन्धो विच्छिन्नो भवतीत्यर्थः। कुटुम्बे विच्छेदः पतति परं रतिः उभयोः प्रेमिणोः प्रीतिः अनुषङ्गं योगं प्राप्नोति। परस्परं तयोः प्रीतिर्बद्धा भवतीत्याशयः। प्रीतिर्योगं प्राप्नोति, परं ग्रन्थिर्दुर्जनहृदये पतति। इदमत्याश्चर्यमुदेति। यद्वस्तु परस्परसम्मिलितं ग्रथितं भवति तदेव विच्छिन्नत्वेन भङ्गं प्राप्नोति। यस्य च भङ्गो भवति तत्रैव पुनर्योजनस्यावश्यकता। यत्र च त्रुटितस्य पुनर्योगः सम्पद्यते, तत्रैव ग्रन्थिः पतति इति लोके जगद्व्यवहारः। अत्र तु विपरीता लीला, नेत्रयो- र्योगः, कुटुम्बे भङ्गः, गुणानुबन्धस्तु विपरीतम्। ग्रन्थिर्दुर्जनहृदये इति रहस्यसङ्गतिः। परमानन्दस्तु—"लिखति दृशोरिह सङ्गमं तदपरिकुलं प्र-

'दृग उरझत टूटत कुटुम जुरत चतुर चित प्रीति।
परति गाँठ दुरजन हिये दई नई यह रीति ॥ ७१ ॥'

हरति। ग्रन्थिर्दुर्जनमानसे प्रीतिरद्भुता भाति॥' इत्याह। दृशोः दृग्युगं मिलति? कोऽर्थः? 'नेत्राभ्यां नेत्रे मिलतः' इत्यर्थश्चेदभिप्रेतस्तर्हि 'दृग्भ्याम्' इति तृतीयां विना सोऽयं दुःसाधः। हे सहचरि! कुलं नो जहाति? पृथक्करोत्येव। अन्यत्र नेत्रपरिचालने कृते कुटुम्बजना बहिष्कुर्वन्त्येव। काऽऽसङ्गतिः? ग्रन्थिर्दुर्जनहृदये पतिता! कीदृशो ग्रन्थिः? कुटुम्बत्यागोत्तरं यावत्कालं पुनर्योगो न भवेत्तावत्कालं ग्रन्थिः कथमुद्भवेत्? अस्तु—बिहारिणा कृत्रिमरूपेण असङ्गतिः (अलङ्कारः) परिदत्ताऽभूत्। परमानन्दमहाभागेन तु स्पष्टेयमसङ्गतिः पुरतः स्थापिता॥ ७१॥

लोचनयोरनयोरभूत्किमिति मतौ नायाति।
नीरभरितयोरपि चिरांतृष्णा किमपि न याति॥ ७२॥

अनयोर्नेत्रयोः का विपदुपस्थिता इति बुद्धौ नायाति। सर्वदा (नायकविरहे) अश्रुजलपूर्णयोरप्यनयोः किञ्चिदपि तृषा न निवर्तते। यस्य सन्निधे जलं भवति न स तृषितो भवति। परं सर्वदा जलपूर्णयोरप्यनयोःतृष्णा न यातीत्याशयः। परमानन्दस्तु—'निश्चेहं नयनद्वयं नेदं सखि विपदेव।' इत्याह। स्नेहेन (स्निग्धतया,) शून्ये तृष्णा भवत्येवेति बिहारिवाच्छितमर्थमुन्मूलयामासैव। अत्र 'बिहारि रत्नाकर'कारो जगन्नाथदासोऽपि नेह न, 'नैननिको कछु' इति पाठं स्वीकृत्य विचित्रमाह—"यह प्रेमरूपी तेल नहीं है, मेरे लिये बलाय है इत्यादि."। अत्र स्नेहपदस्य तैलार्थग्रहणे को लाभः? किमु तैलेन तृषा निवर्तते। प्रत्युत तैलवस्तूनामुपयोगे तृषा विशेषतो बाधते। न चायं तैलरूपोऽर्थो 'हरिप्रकाशा'दि प्राचीनटीकासु दृष्टः। आयुर्वेदीयपञ्चकर्मसु' स्नेहनरूपे कर्मणि, तैलं पानाय दीयते, तेन स्नेहेन व्यतिक्रमाद् व्याधिरभूदिति तु 'नेह न नैननिको कछु' पदेन स्पष्टं न प्रतीयते इदं हि आकर्षणमात्रम्। पुनर्यथा रोचते॥ ७२॥

---

१ टि पा 'तृषा कथमपि यातीनं याति'
'अति इन लोयनसौं बढ़ उपजी बड़ी बलाय।
नीर भरे नित प्रति रहैं तऊ न प्यास बुझाय॥ ७२॥

अस्या नायिकायाः; विरहेण तनुः कृशा, तनुः (शरीरम्), इदमवधि (अयमवधिर्यस्य) एतत्पर्यन्तमपि, स्वाभाविकं रङ्गम् (शरीरस्य यः पूर्वं स्वाभाविको वर्ण आसीत्) न इयाय न प्राप। हे कमन! हे प्रणयिन्! अधुनैव अह्नाय (झटिति) गमनं किं प्रस्तूयते, त्वमात्मानमस्याः कामयितारं मन्यसे, एवमवस्थायाम्, पूर्वप्रवासक्लेशादेव नाद्याप्यस्याः शरीरं सुस्थमभवत्। अथापि पुनः प्रवासस्य प्रस्तावं करोषीति नायिकायाः सखी प्रवत्स्यन्तं नायकमाह। मूले 'ललन चलनकी चाल' अत्र योऽनुप्रासः सोऽप्यत्र निर्व्यूढः। 'कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः' इत्यमरः। रत्नाकरस्तु सर्वतो नवीनम् 'विरह दूबरे गात' पदेन नायिकानायकयोरुभयो-'र्गात्र'रूपमर्थमाह ॥ ७४ ॥

—॥ अनुरागः ॥—

रमण रम्यरूपस्य ते केयं रीतिरुदेति।
क्षणमपि लग्ना यत्र दृक् क्षणमपि न क्षणमेति ॥ ७५ ॥

हे सुन्दर! तव रमणीयस्य रूपस्य केयं रीतिरस्ति। यत्र रूपे क्षणकालमपि लग्ना पतिता दृष्टिः, क्षणकालार्थमपि क्षणं सुखं (निद्रादिजनितम्) न प्राप्नोति। त्वयि विलोकिते सति, तव रूपनिभानुरागेण विवशीकृतहृदया सा न क्षणमपि निद्रां भजते इति नायिकासखी नायकं वक्ति ॥७५॥

गोकुलकुलनार्यो न कति, कति न शिक्षिताः सन्ति।
मुरलीस्वरलीना न कति, कुलरीतिं व्यपयन्ति ॥ ७६ ॥

गोकुले कति या कुलनार्यो न सन्ति। अपि तु सर्वा एव। कति च ताः कुलनार्यः काभिर्न शिक्षिताः सन्ति। अपि तु सर्वा एव सर्वाभिः कुलमर्या-

---

'लाल तुम्हारे रूपकी कहौ रीति यह कौन।
जासौं लागत पलक दृग लागत पलक पलौन ॥ ७५ ॥'
'रिती [illegible] गोकुल कुलवधू काहि न केहि सिख दीन।
कौने तजी न कुलगली ह्वै मुरली-सुर-लीन ॥ ७६ ॥'

दत्तं मे, मामकमभूच्चिवसति सह जीवेन ।
दयित ! सपत्नीकर इदं मनो देहि न बलेन ॥ ७८ ॥

हे दयित ! त्वया स्वस्य मनो मह्यं दत्तम् । त्वया यदा मनो मह्यं दत्तं तर्हि तत्, मदीयमेवाऽभवत् । इदानीं तस्योपरि ममैवाधिकारः । तत् मनः, साम्प्रतं मम जीवेन सह निवसति । अहं तत् मनः स्वजीवितसमं प्रतिपालयामीत्यर्थः । इदानीं तदिदं मनः, बलात् (अर्थात् मज्जीवितेन सह बद्धमपि, बलपूर्वकं आकृष्य) सपत्न्या हस्ते न देहि । यदि तत् बलादाकर्षसि, तदा मम जीवितमपि गमिष्यसीति ध्वन्यते । अत्र 'उपपत्नीभ्यो रासि तावदसमुचितमधुनैव ।' इति परमानन्दः । छन्दोभङ्गस्तु प्रत्यक्ष एव—'रासि' इति कियन्मधुरो धातुः ! अधुनैव इति एवकारस्य किं स्वारस्यम् ? अग्रे यदि मनोऽन्याभ्यो दीयेत तर्हि किं नायिका प्रसीदेत् ? विहारी तु अग्रे दानस्य वाग्दानं न करोति । आह स—"सो मन बाँधि न सौंपिये पिय सौतिन के हाथ ।" उपपत्नीभ्य इत्यपि सपत्न्या उपपर्याय एव ॥ ७८ ॥

## ॥ दम्पत्योरभिसारः ॥

मिलितमभूदङ्गं द्वयोश्छायाचन्द्ररुचीषु ।
निर्बाधे सह गच्छतो हरिराधे वीथीषु ॥ ७९ ॥

हरेः राधायाश्चेति द्वयोरङ्गम्, छायायां चन्द्रकान्तिषु च मिलितमभूत् । कृष्णत्वात् हरेरङ्गं छायायां मिलितम्, गौरत्वाद् राधाया अङ्गं चन्द्ररुचिषु मिलितम् । यथासंख्यम् । अत एव येनाप्यलक्षिते, इति निर्बाधे निःशङ्के हरिराधे, वीथीषु ('गली') सह गच्छतः । हरिः राधा च वीथीषु एता-

---

'मोहि दियो, मेरो भयो, रहत जु मिल जिय साथ ।
सो मन बाँधि न सौंपिये पिय सौतिनके हाथ ॥ ७८ ॥'
'मिलि परछाँही जोन्हसों रहे दुहुनके गात ।
हरि राधा इक संग ही चले गली महिं जात ॥ ७९ ॥'

छिद्रनौ सह सह गच्छेताः, परं तौ कोऽपि न पश्यति । हरिः श्यामवर्णत्वा-च्छायायामेव मिलितः, राधा च चन्द्रिकायामेवैकीभूता इति मिलितौ सह गच्छत इत्याशयः । मीलितम् । दधीयु. धीयीधिविति 'इरितश्चाद्दितः' इति ङीप् । राधे, राधे इति भावः । परमानन्दस्तु "कमूढयुतं च छविते संगच्छतः सहैव ।" इत्याचाह । संगच्छत इति लोकाग्यास्याकरणसरेक्षत इत्यानुप्तम् ॥ ७९ ॥

—सुरतम्—

पावकशिखेव सा यथा यथा हृदयमुपयाति ।
वक्षस्तरुणीस्पृष्टमिव तथा तथा निर्वाति ॥ ८० ॥

अग्निशिखा इव उज्ज्वलकान्तिः सा नायिका, यथा यथा हृदयमुपयाति, वक्षःस्थलमाश्लिष्यति । तथा तथा तरुणी-('गुलाब') जलस्पृष्टमिव हृदयं निर्वाति शीतलं भवति । अग्निज्वालासादृश्यं नायिकायास्तद्गुणोपेतेऽपि वर्णगुणम् । अग्निज्वालोपमाया आलिङ्गनेऽपि निर्वृतिरिति यथा विभावना, विषमो (द्वितीयः) वा ॥ ८० ॥

सपदविनति विपरीतरतमर्थितमथ रमणेन ।
दीपमिह्नयन्ती जगौ सा ललितमौनेन॥ ८१ ॥

पदन्नतमपूर्वकं रमणेन विपरीतरतं प्रार्थितम् । अथ सा नायिका दीपम् ह्रस्यन्ती शमयन्ती । 'दीपो भवति । अतः प्रकाशो मेऽहं लज्जामि ।' इति हितं मधुरं ललितं सुवर्णशिल्पम् । ललितेन मौनेनैव जगौ स्वस्वरमन्वदत् । वामैर्वाचा वदने किञ्चन कोपम्, अपि तु ललितं हृदयमेवैव अतदभ्युदयं प्रकटिता-

शयः । परमानन्दस्तु–'सुरतविपर्ययवाञ्छया पत्यौ प्रणमति सैव । ददावुत्तरं मानिनी सस्मितमौनेनैव ॥' इति दीर्घं प्रति इङ्गितस्य कथामेवापलपत् । 'सैव उत्तरं ददौ'? तर्हि अन्यः कश्चन वाहीकस्तत्राप्यपेक्ष्यते ? सुरतविपर्ययपदेन विपरीतरतस्य ग्रहणमपि न कुत्रचिद्दृष्टम् ॥ ८१ ॥

→ नखक्षतम् ←

मरकतभाजनसलिलगा मृगाङ्कनवलेखेव ।
सूक्ष्मपटान्तरिता लसति हरितनुनखरेखेह ॥ ८२ ॥

सूक्ष्मपटेन अन्तरिता, सूक्ष्मपटमध्याद् दृश्यमाना इत्यर्थः । हरेः, श्यामवर्णायाः तनोः ( शरीरस्य ) नखरेखा । मरकतभाजने भरिते सलिले गता ( प्रतिबिम्बिता ), चन्द्रस्य नवीना कला इव, इह लसति । श्वेतवर्ण-सूक्ष्मपटान्तरिते श्यामशरीरे नखरेखा, नीलमणिभाजनमध्ये जलं भृतं भवेत्तत्र द्वितीयातृतीयाचन्द्रस्य कला प्रतिबिम्बिता भवेत्, तादृशी शोभत इत्याशयः । कस्याश्चित् सविधे कृतकेलिरागतोऽसीति सूचयितुं नायिकासख्याः नायकं प्रत्युक्तिः । अन्यटीकासु नायिकाया एवोक्तिः । परमानन्दस्तु–"नख-रेखा मेघडम्बरी तनुवसनावृत एव ।" इत्यादि । 'सूक्ष्मं वस्त्रं तेनावृते तव मेघडम्बरी' इति टीका । तनुशब्दस्य स्त्रीत्वमेव प्रसिद्धम्, अन्यत्किं परमानन्द एव जानीयात् ॥ ८२ ॥

→ परिहासः ←

हरिरयदद्दिनमणिमिमं प्रणमत करद्वयेन ।
श्रुत्वाऽऽसां सस्मितमभून्नयनं सेर्ष्यमनेन ॥ ८३ ॥

---

'मरकत-भाजन-सलिल-गत इन्दुकला के भेस ।
झीन झगा में झलमलत स्याम गात नखरेख ॥ ८२ ॥'
'रवि बंदौ कर जोरि, ए सुनत स्याम के बैन ।
भये हँसौंहैं सबनके अति अनखौंहैं नैन ॥ ८३ ॥'

अथ कवित्वपरिचयम् आनायि प्रापित । महिम्ना अतुलैरनुपमै । अस्य काव्यनिर्माणस्य, तत्त्व समदायि दत्त प्रबोधितमित्यर्थः ॥ ८१ ॥

क०–भारतमार्तण्डशिष्यवर्यान् प्राच्यचर्याचणान्
वेद्मि बहुविज्ञान् पुष्टिमार्गेऽधुना धन्येऽहं
शीघ्रकव्युपाधिमाननीयान् शब्दशय्याशालि-
प्रौढरचनायामद्वितीयानद्य मन्येऽहम् ।
मञ्जुनाथमातुलानमायवत्सलानपि तान्
जाने नयनिस्तुलान् निबन्धे जातिजन्येऽहं
मर्यादानुसारि–सांप्रदायिकसपर्यान् सदा
श्रीनन्दकिशोरशास्त्रिवर्यान् बहु मन्येहम् ॥ ८२ ॥

सहस्रावधानिप्रवर–भारतमार्तण्डपद्मजनदीश्रीगोवर्द्धनशर्माण ( प गट्टूलालजीति प्रसिद्धा ) तैलङ्गा कच्छप्रान्ते ( १९०१ तमे विक्रमाब्दे ) जन्म लेभिरे । एते हि जन्मान्धा अपि अतिबुद्धिमन्तोऽलौकिकविद्यानिधयोऽभूवन् । शतावधान साधयित्वा क्रमेण सहस्रावधानपर्यन्तमिमे चक्रिरे । एतेषामलौकिकपाण्डित्यसन्तुष्टै काशीकलकत्तादिनागरपण्डितै वेदान्तभट्टाचार्य-भारतमार्तण्ड शीघ्रकवि प्रभृतय उपाधयो ददिरे । एतेषामद्यावधिप्रकाशिता ग्रन्था —मारुतशक्ति ( प्राभञ्जनस्य टीका ) सिद्धान्तमार्तण्ड –वेदान्त चिन्तामणि , कृष्णाभिसार । अप्रकाशितास्तु उपनिषद्भाष्याणि शुद्धाद्वैत-चन्द्रोदयप्रभृतय । एतेषामेव महाभागानामिमे प्रधानशिष्या । भक्तिनौकां प्रदाय जीवाना ससारसागरतारकतया धन्ये, पुष्टिमार्गे वल्लभाचार्य-प्रचारितवैष्णवसम्प्रदाये । एतेषा रचना, प्रतिषण्मास नाथद्वारस्थतिलकायितगोस्वामिनो तत्सुतानां च जन्मोत्सवसमये मार्मिकाणा विदुषा हृदयमानन्दयति । प्रचार्यते वेभि ( टिप्पणी ) ति प्रसिद्धमुत्सवदिवससूचक पञ्चाङ्ग नाथद्वारात् । इमे तत्रत्यगोस्वामितिलकत्त्रयानपाठयन्, साम्प्रत तत्र 'विद्या विभागे'ऽधिष्ठिता सन्ति । अमाय निर्व्याज वात्सल्यान् । जातिजनिते निबन्धे

( द्वैविध्ये 'तड' ) नयनिरतुलान् नीतौ निरुपमान् । वल्लभसंप्रदायप्रसिद्धा या मर्यादा धार्मिकपद्धतिस्तदनुसारिणी सपर्या सेवा येषां तान् । तथा च मथुरायां 'श्रीनाथजीकी बैठक' इति प्रसिद्धं श्रीनाथमन्दिरं, तत्रत्या सेवा धानेन सूच्यते । इमेऽपि विंशतिपरिमितान्यवधानानि चक्रुः । तत्कालं समस्यादिपूर्त्यां 'शीघ्रकविः' इत्युपाधिमिमे प्रलक्षयन्ति ॥ ८२ ॥

सो०—तत्साहाय्यमवाप्य, विद्यायामिव बहुविधे ।
व्यवहारेऽप्ययमाप, लब्धुं परिचयमवसरम् ॥ ८३ ॥

तेषां नन्दकिशोरशास्त्रिणां साहाय्यं प्राप्य, विद्यायामिव बहुविधे व्यवहारेपि परिचयं लब्धुमवसरं प्रापेति योजना ॥ ८३ ॥

दो०—भाग्यं बुद्धिमथावसरमासाद्य प्रयतेन ।
शनैः शनैः खण्डितमहो ऋणजालं तदनेन ॥ ८४ ॥

अवसरं अनुकूलं कालम् । प्रयतेन प्रयत्नतत्परेण । तत् ऋणजालम्, अनेन ( मथुरानाथेन ) खण्डितम् समापितम् ॥ ८४ ॥

मातुलादिसंबन्धिनामन्येषां च ऋणानि ।
पितामहानुग्रहवशात्सर्वाण्यपि दलितानि ॥ ८५ ॥
यथाक्रमं निजमतिबलादायसमृद्धिरकारि ।
स्वजनेष्वथ कोविदगणे गौरवमपि समचारि ॥ ८६ ॥

आयस्य समृद्धिः कृता । स्वजनेषु जातिसमाजे, कोविदगणे विद्वन्मण्डले च, गौरवं प्रतिष्ठा समचारि स्थापिता ॥ ८६ ॥

पारम्परिकं जीर्णगृहमामूलाचिरमायि ।
परःसहस्रै रूप्यकैरन्यद् गृहमक्रायि ॥ ८७ ॥

अन्यद् 'नागरपाडास्थं गृहम्' क्रीतम् ॥ ८७ ॥

एवं शनकैरात्मपद—गौरवगुणोचितानि ।
साधनानि सर्वाण्यहो सम्यक् संघटितानि ॥ ८८ ॥

आत्मनः स्थानस्य, प्रतिष्ठायाश्चोचितानि । संघटितानि आयोजितानि ॥८८॥

सम्प्रति गुणगौरवविदो विज्ञाः स्नेहमयन्ति ।
उच्चराजकीया जना विनयाद्वरिवस्यन्ति ॥ ८९ ॥

राजकीया उच्चपदाधिकारिणः । वरिवस्यन्ति सपर्यन्ति ॥ ८९ ॥

कुटिलोपि च बहिरभिनयन्विनयं संमुखमेति ।
ध्रुवमिदमनुकूले विधौ सर्वं सहजमुदेति ॥ ९० ॥

अन्तः कुटिलोपि बहिर्विनयमभिनयन् नाटयन्संमुखमेति । अनेन विधेरानुकूल्यं सूच्यते ॥ ९० ॥

सहृदयसुजनसहायतामाप्य मतिं स दधार ।
नवहिन्दीसाहित्यवरविद्यालयं बभार ॥ ९१ ॥

आ-आप्य, आङ्पूर्वकादाप्नोतेर्ल्यप् । नवहिन्दीसाहित्य०—'हिन्दीसाहित्यरात्रिपाठशाला'नामको हिन्दीविद्यालय आङ्ग्लविद्यालयस्य समीप एव वर्तते । अत्र हि हिन्दीसाहित्यसंमेलनतो नियमितानां 'प्रथमा-मध्यमा-उत्तमा-'परीक्षाणां ग्रन्था नियमानुसारं पाठ्यन्ते । दशाधिका अध्यापका अत्र प्रेम्णाऽध्यापयन्ति । तेषु बहव एवावैतनिकाः । वर्षद्वयाज्जयपुरराज्यतोऽस्य शिक्षाविभागद्वारा चत्वारिंशन्मुद्राः प्रतिमासमार्थिकसाहाय्यं लब्धम् । एतद्ग्रन्थकर्त्रा परिचालितेन 'कविमण्डलेन' सोयं विद्यालयः पूर्वं प्रतिष्ठापित इति दिक् ॥ ९१ ॥

सो०—प्राकृतलोकसुखाय, यस्या रसपाकोऽभवत् ।
संस्कृतपथं निनाय, गाथासप्तशतीं स ताम् ॥ ९२ ॥

प्राकृतभाषानुरागिणां लोकानां सुखाय यस्या रसपाकोऽभवत्तां हालकृतां गाथासप्तशतीं संस्कृतपथं संस्कृताया भाषायाः मार्गं प्रापयामास । समश्लोकानुवादेन तां संस्कृतमार्गं आनिनायेति भावः । अत्र प्राकृतानां साधारणानां जनानां रसनीयां सप्तशतीं, संस्कारसंस्कृतानां नागरिकाणामुपभोग्यां

चक्रे इदमपि शब्दशक्त्या सूच्यते, तेन च संस्कृतभाषाया अपूर्वोत्कर्षदायकत्वमभिव्यज्यते ॥ ९२ ॥

स हि संस्कृतभाषागहनतत्त्वाविष्करणाय ।
यद्यत् किञ्चन चरति तद्विदितं स्वादराय ॥ ९३ ॥
अथवा कृतवान् किं न किं, ? करुणां योऽधिजगाम ।
मण्डनकुलतन्तुः स किल जगन्नियन्तुर्नाम ॥ ९४ ॥

यो मण्डनकुलतन्तु जगन्नियन्तु करुणामधिजगाम, स किं किं वा न कृतवानिति योजना । तद्विस्तरस्त्वग्रे ॥ ९४ ॥

क०—पञ्चनदविश्वविद्यापीठे सर्वमूर्द्धपदं
चरमपरीक्षार्थिषु सोयं समवाप्तवान्
जयपुरराजकीयशिक्षाप्रविभागादथो
व्याकरणे शास्त्रिपदमेष परिलब्धवान् ।
साहित्येपि लेभे क्रमादेष किलाचार्यपदं
रत्नाकरमुत्प्रमदं सोयं संप्रथितवान्
शास्त्रमर्म शीलितवान्, वाग्मिनः प्रकीलितवान्,
वाचमथोन्मीलितवान्, किं वा न कलितवान् ९५

पञ्चनदविश्वविद्यालये चरमपरीक्षार्थिषु ( शास्त्रिपरीक्षार्थिषु ) सर्वप्रथमस्थानम् ( First in whole University )। 'संस्कृतरत्नाकर'नामकसंस्कृतमासिकपत्रं महामहोपाध्याय प० गिरिधरशर्मचतुर्वेदेन एतद्ग्रन्थकर्त्रा चोभाभ्यां दशवर्षपर्यन्तं सम्यक् सम्पाद्यते स्म जयपुरात् । तदिदानीं कति पयवर्षेभ्य प्रतिरुद्धम् । उत्प्रमदं यथा स्यात्तथा प्रकाशितवान् । वाचं कवितामयीं वाणीं प्रकटितवान् ॥ ९५ ॥

दो०—राजाङ्गलविद्यालयाध्यापकपदमयमाप्य ।
माद्यति मानमहीपतेश्छत्रच्छायमवाप्य ॥ ९६ ॥

जयपुरराजकीय'महाराजास् कॉलेज' इत्यस्य संस्कृतप्रोफेसरपदम् आ-आप्य । छत्रस्य छाया इति छत्रच्छायम् 'विभाषा सेनासुरेति' क्लीयत्वम् । माधति, संतोषेण प्रसीदति । 'मौज' इति भाषायाम् ॥ ९६ ॥

यः किल मण्डनकुलगृहं व्यभजद्विलसद्धस्ति ।
मञ्जुनाथनामा सपदि सोयं संमुखमस्ति ॥ ९७ ॥

विलसन् हस्ती यस्मिन् तत्, ईदृशं मण्डनकुलगृहमाश्रयत् । अनेन मण्डन-कवीन्द्रस्य तादृङ्महिमशालित्वमात्मनश्च तत्स्थाने स्थितस्यापि अताद्-शत्वं सूच्यते ॥ ९७ ॥

कविजनरङ्गान्निर्भरं मनस्तरङ्गाद्वापि ।
अपटु ग्रथितं यत्किमपि, तद्वोऽभिमुखमवापि ॥ ९८ ॥

कविजनानां रङ्गात् अनुरागजनितादभ्यासात् । अपटु अप्रौढमसुन्दरमिति यावत् । ग्रथितं यथाकथञ्चिद् गुम्फितम् ( गांठना इति भाषायाम् । अने-नात्मनोऽशक्तिं प्रकाश्य विनयः सूच्यते । ) वः युष्माकम् । अवापि प्रापि-तम् ॥ ९८ ॥

मध्यममुत्तममधममिति सन्तस्तद्विमृशन्तु ।
मनोमात्रवेद्येष्वपि च के वाचं नटयन्तु ॥ ९९ ॥

विमृशन्तु समीक्षन्ताम् । मानसमात्रैकवेद्येषु कवित्वगुणपरीक्षादिषु, विषयेष्वपि, वाचं के नटीं कुर्वन्तु ? यं विषयं मन एव बोद्धुं पारयेत्तत्र, वाचा कथनेन किं गौरवमिति भावः । 'न हि कस्तूरिकाऽऽमोदः शपथेन विभाव्यते' ॥ ९९ ॥

सत्सु किमहमाम्रेडये गिरं कालिदासस्य ? ।
'वह्नौ सिध्यति शुद्धता श्यामिकापि कनकस्य' ॥१००॥

आम्रेडये द्विवारमावर्तयामि । 'हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामि-कापि वा' ॥ १०० ॥

समाप्तः ।